॥ श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः ॥

श्रीमते रामानुजाय नमः

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

# तप्तचक्राङ्कनप्रमाणविवृतिः



श्रीनिवासब्रह्मतन्त्रपरकाल गुरूत्तमैः ।
क्रियते तप्तचक्राङ्कप्रमाणविवृतिः स्फुटम् ॥

तप्तचक्राङ्कनादिसहितोर्ध्वपुण्ड्रधारणे परस्परविरुद्धानि बहूनि प्रमाणानि संदृश्यन्ते । तत्रोत्सर्गापवादन्यायेन केषांचिद्व्यवस्था, केषां चिदधिकारिभेदेन व्यवस्थोच्यते । तथा हि–तत्रादौ चक्राङ्कननिषेधवचनान्युदाह्रियन्ते

विष्णुस्मृतौ–

शङ्खचक्राद्यनङ्कश्च नृत्तगीतादिकं तथा ।
एकजातेरयं धर्मो न द्विजातेः कथं च न ॥

न जातु स्यात् द्विजन्मनः इति पाठान्तरम् ।

निर्णयसिन्धौ–

यस्तु सन्तप्तशङ्खादिलिङ्गचिह्नतनुर्द्विजः ।
स सर्वयातनाभोगी चण्डालो जन्मकोटिषु ॥
यस्तु सन्तप्तशङ्खादिलिङ्गाङ्कितततनुर्नरः ।
सम्भाष्य नरकं याति यावदिन्द्राश्चतुर्दश ॥

इति बृहन्नारदवचनम् । अत्र तमित्यध्याहार्यम् ।

इदमपि निर्णयसिन्धावुदाहृतम्–

चक्राङ्किततनुर्वाऽपि तथा लिङ्गाङ्कितोऽपि वा ।
नाधिकारी स विज्ञेयः श्रौतस्मार्तेषु कर्मसु ॥

गोखिलोऽपि–

श्रौतस्मार्तक्रियो विप्रो नाङ्कयेदङ्गमङ्कनैः ।
अपि विष्ण्वादिसम्बन्धैस्तप्तैर्वा पतितो भवेत् ॥

अज्ञानादथ वा लोभाद्रागतो वा सुदर्शनम् ।
धत्ते कुलघ्नं तं दृष्ट्वा सवासा जलमाविशेत् ॥
भुजाग्रे सलिलेनैव लिखेद्यस्तु सुदर्शनम् ।
वेदाग्निज्ञानवान् सोऽपि दहत्यासप्तमं कुलम् ॥

शङ्खं चक्रं च पद्मं च यो मूढो धारयेत्तनौ ।
पाषण्डस्सहि विज्ञेयस्सर्वकर्मबहिष्कृतः ॥

शातातपः—

अङ्गेषु नाङ्कयेद्विप्रो देवताऽऽयुधलांछनैः ।
दहनाल्लेखनाद्विप्रः पातित्यं याति तत्क्षणात् ॥

बोधायनोऽपि—

नाङ्कयेन्नदहेद्देहं दहेच्चेत्कामकारतः ।
नाधिक्रियेत दग्धाङ्गः श्रौतस्मार्तेषु कर्मसु ॥
चक्रांकयेद्यदि वा दोषात्पतत्येव न संशयः ।

यमोऽपि—

नांकेयन्नदहेद्गात्रं देवताऽऽयुधलांछनैः ।

चक्रोपनिषदि—

तस्मात् शूद्राणामेव शङ्खचक्रं भुजे धार्यमिति ।

स्मृतिरत्ने—

भूदेवस्तप्तमुद्राभिः चिह्नं कृत्वा विमूढधीः ।
इहजन्मनि मूढस्स्यात् प्रेत्य च श्वा भविष्यति ॥

स्मृत्यन्तरे—

यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि तु ।
श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी ॥

शङ्खं चक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा ।
स शूद्रवद्बहिष्कार्यः सर्वस्मात् द्विजकर्मणः ॥

यथा श्मशानगं काष्ठमनर्हं सर्वकर्मसु ।
तथा चक्रांकितो विप्रोऽप्यनर्हस्सर्वकर्मसु ॥

ब्राह्मपुराणे--

तप्तमुद्रात्वन्त्यजाय हरिणा निर्मिता पुरा ।
गोपीचन्दनसंलिप्तफालकाश्चान्त्यजातयः ॥

मानवे च--

आयुधैश्शङ्खचक्राद्यैर्नदहेच्च कदाच न ।
मनुष्याणां तु नाम्नैव विलिखेच्चोरसि क्रमात् ॥

दग्धाङ्गश्चायुधैर्दिव्यैः लिख्यते नरनामतः ।
श्रौतस्मार्तसमाचारे नाधिकारी कदा च न ॥

दग्धाङ्गा लिखिताङ्गाश्च न संभाष्या द्विजातिभिः ।
न द्रष्टव्यांश्च तान् राजा देशाच्छीघ्रं प्रवासयेत् ॥

नारदीये -

स्वधर्मत्यागिनो राजन् वेदमार्गबहिष्कृताः ।
आगमान् पञ्चरात्रादीन् विशन्ते नरकान्नराः ॥

अनिमित्तं दहेद्देहं यः पुमान् बाधवर्जितः ।
हव्यकव्यादिदानेषु तं त्यजेदन्त्यजं यथा ॥

कौर्मे -

अतीव पतितानां हि श्वापदाद्यङ्कनं नृणाम् ।
विधीयते न शुद्धानां ततश्शुद्धं न चाङ्कयेत् ॥

अध्यापनेचाध्ययने श्रौतस्मार्तेषु कर्मसु ।
संभाषणे च संबन्धे नाधिकारी च लांछितः ॥

निर्णयसिन्धौ--

शिवकेशवयोरङ्कांश्शूलचक्रादिकान् द्विजः ।
न धारयेत मतिमान् वैदिके वर्त्मनि स्थितः ॥

स्कान्दे सूतसंहितायाम्--

स्वदेहे परदेहे वा न कुर्यादङ्कनं नरः ।
यदि कुर्याच्च चक्राद्यैः पतत्येव न संशयः ॥

मानवे पुराणे--

केन चिह्लांछितो मर्त्यो न साक्षी सर्वदा भवेत् ।
श्रौतस्मार्तसदाचारे नाधिकारी च लांछितः ॥

लांछिताश्च न संभाष्या न स्पृश्याश्च तथैवच ।
न दर्शनीयास्तान् राजा देशाच्छीघ्रं प्रवासयेत् ॥

इत्यादीनि बहूनि वचनानि सन्ति । इमानि वचनानि निर्णयसिन्धु हेमाद्रि वैद्यनाथीयेषु कानिचिदुदाहृतानि ॥

अथ चक्राङ्कनविधायकानि बहूनि स्मृतीतिहासपुराणादिषु दृष्टानि प्रमाणान्युदाह्रियन्ते ॥ तत्र श्रुतयः । त्रिष्वपि वेदेषु--

' पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनूर्न तदामो अश्नुते श्रिता स इद्वहन्तस्समाशत ' इति । अस्यार्थः– हे ब्रह्मणस्पते ? चतुर्मखस्यापि नायक विभो त्वम्, विश्वतस्सर्वेषां गात्राणि शरीराणि पर्येषि व्याप्नोषि । व्यापकस्य तव विततं पवित्रं ' चक्रं सुदर्शनं सहस्रारं पवित्रं चरणं पविः ' इति नैघण्टुकाः । श्रीशास्त्रे च ' पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनम् । पर्यायवाचकाह्यते चक्रस्य परमात्मनः ' इति । अत्र यदस्तीत्यध्याहार्यम् । तेन अतप्ततनूः अत एवामः- अपक्वः अदग्धपाप इति यावत् । तत् - प्रसिद्धं मोक्षलक्षणं सुखविशेषं नाश्नुते तत्पवित्रं सदा वहन्तः अत एव श्रितासः- परिपक्वाः तत्सुखमाशत अश्नन्ति । अत्रातप्ततनूरित्यस्य प्रतिसंबन्धितया श्रितास इत्यस्य परिपक्वा इत्यर्थोऽवगम्यते । अस्या एव ऋचस्तात्पर्यं सामवेदे मैत्रायणीयशाखायां काचन श्रुतिर्विशदीकरोति । ' पवित्रामित्यग्निः । अग्निर्वै सहस्रारः । सहस्रारो नेमिः । नेमिना तप्ततनूर्ब्रह्मणस्सायुज्यँ सलोकतामाप्नोति ' इति । अत्र नेमिशब्देन नेमियुक्तं सहस्रारं लक्ष्यते । सहस्रारशब्दानुगुण्यात् । अन्यथा सामानाधिकरण्यानुपपत्तेः ।

ऋग्वेदे बाष्कलसंहितायामाथर्वणे च —

' चक्रं बिभर्ति वपुषाऽभितप्तं बल देवानाममितस्य विष्णोः । स एति नाकं दुरिता विधूय प्रयांति यद्यतयो वीतरागाः ' इति । अमितस्यापरिमितस्य सर्वव्याप्तस्य विष्णोः अभितप्तं तापयुक्तं बलं देवानां बलभूतं चक्रं वपुषा यो बिभर्ति स दुरितानि विधूय वीतरागा यत्पदं प्रयान्ति प्राप्नुवन्ति तत् नाकं परमं पदं प्राप्नोतीत्यर्थः ॥

तत्रैव-- ' एभिर्वयमुरुक्रमस्य चिह्नैः अङ्किता लोके सुभगा भवामः । तद्विष्णोः परमं पदं ये गच्छन्ति लांछिताः ' एभिरिति प्रकृतचक्रादिपरामर्शः ।

उरुक्रमस्य· त्रिविक्रमस्येति यावत् ॥

तत्रैवाथर्वणे —

‘ चक्रमादायाग्नौ प्रताप्य ब्राह्मणस्य दक्षिणे बाहौ धारयेत् । पाञ्चजन्यमादायाग्नौ प्रताप्य ब्राह्मणस्यान्यबाहौ धारयेत् । ब्रह्मवादिनो वदन्ति ’ इति ॥

यजुषि बृहदारण्यकभेदे सुदर्शनोपनिषदि च--

निचिक्षेप सुषणाभिद्यमान मध्येबाहुमदधत्सुदर्शनम् । विष्णोरिदं भूरि तेजः प्रधर्षति दिवानक्तं विभृयुस्तज्जनासः ’ इति । यो मध्येबाहुम् बाह्वोर्मध्ये सुदर्शनमदधत् दधार, भिद्यमानमनेकप्रकारेण विभज्यमानं नानाविधमिति यावत् । यद्वा भिद्यमानं जनाद्भिन्दानं, कर्मणिप्रयोगश्छान्दसः । सुषणमन्तः-करणपापं नितरां चिक्षेप क्षिप्तवान् भूरिद बहुफलप्रदं भूरितेजः सुदर्शन प्रधर्षति पापराशिं विनाशयतीति यावत् । तस्मात् जनासः जनाः दिवानक्तं तद्विभृयुरिति । सुषणाति षोऽन्तकर्मणीत्यस्य कृति टिलोपश्छान्दसः ॥

ऋग्वेदे बह्वृचे–

प्रते विष्णो अब्जचक्रे पवित्रे जन्मांबोधिं तर्तवे चर्षणीन्द्राः । मूले बाह्वोर्दधते ऽन्ये पुराणाः लिङ्गान्यन्ये तावकान्यर्पयान्ति ’ हे विष्णो ते पवित्रे शङ्खचक्रे जन्माम्बोधिं तर्तवे तर्तुं, चर्षणीन्द्राः ज्ञानपरिपूर्णाः बाह्वोर्मूले दधते । अन्ये पुराणा ऋषयः तावकानि पञ्चायुधानि अङ्गे शरीरे अर्पयन्तीति ॥

यजुष्षु कठशाखायाम्

धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा । स्वरेण मन्त्रेण सदा हृदिस्थं परात्परं यो महतो महान्तम् ’ इति । यो महात्मा सदा हृदये निवसन्तं परतोऽपि परं महतोऽपि महान्तं विष्णुं प्रणवेन मन्त्रेण ध्यायति स धृतोर्ध्वपुण्ड्रः कृतचक्रधारणश्च भवेदित्यर्थः ॥

अथर्वणे महोपनिषदि ब्रह्मसूक्ते–

‘ दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् । सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ’

यजुःषि काठके--

चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूताः । अतिपाप्मानमरातिं तरेम । लोकस्य द्वारमर्चिमत्पवित्रम् ।

ज्योतिष्मद्भ्राजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानम् । चरणं नो लोके सुधितां दधातु' इति । येन चरणेन पूतः यदङ्केन शुद्धः दुष्कृतानि सर्वाणि पापानि तरति । तत् विततं विस्तृतं पुराणं पुरातनं चरणं चक्रं रथचरणशब्दस्यार्थोक्त्या 'चरणं चक्रम्' इति निघण्टुपाठाद्वा चरणशब्दस्सुदर्शनपरः । पवित्रं पावनं यतः स्वसम्बन्धेन सकलमपि पापसमुदायं निवारयति अतोऽतीव पावनमिति वाक्यार्थः । शुद्धेन पवित्रेण स्वसम्बन्धिनामपि शुद्धिहेतुभूतेन चरणेन पूतास्तदङ्केन शुद्धाः पाप्मानं पापरूपमरातिं शत्रुमतितरेम अतिक्रम्य वर्तिषीमहीति स्वात्मन्याशासनम् । अर्चिष्मत् ज्योतिष्मत् महस्वदिति ज्वालाकिरणप्रकाशभेदस्य विवक्षितत्वादपौनरुक्त्यम् । एतत्सुदर्शनस्य स्वतो दीप्यमानतया धारणदशायां तप्ततया चोपपद्यते । अत एव भ्राजमानं शोभमानं पवित्रमिति पापनिवर्तकत्वमुच्यते । लोकस्यद्वारमिति स्वर्गादिलोकारम्भत्वं, अमृतस्य धारा बहुधा दोहमानमिति मोक्षहेतुत्वं अमृतस्य धाराः निःश्रेयसानुभवान् बहुधा नानाविधोपायैः दोहमानं दुहानम् । छान्दसत्वात्साधुः । एतादृशं चरणं चक्रं लोके अस्मिन् लोके नः अस्मान् सुधितान् सुप्रतिष्ठितान् दधातु करोतु । अत्रापि पूर्वमन्त्रानुगुण्यात् स्वदेहभृतं चक्रमेव करोत्विति गम्यते

ऋचि साम्नि च--

'चमूषच्छ्येनश्शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् । अपामूर्मिं सचमानस्समुद्रं तुरीयं धाम महिषो विवक्ति' इति ॥

तत्रैव–

'अथ कात्यायनेति होवाच । परं ब्रह्मेत्येके देवो विश्वतश्चक्षुरिति विश्वात्मा विश्वतो बाहुरिति । स एष पुरुषोऽन्तर्याम्यस्य विश्वतोमुखस्सर्वात्मा विश्वतस्पादिति नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते' इति । 'संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः । एषोऽन्तर्यामोऽन्तर्यामस्स आदित्यतेजो भवति स आदित्यलोको भवति स विष्णुलोको भवति स विष्णुरेव भवति तप्तं चक्रं द्विभुजे धार्यमिलाग्निहोत्रमेव लोको भवत्यूर्ध्वपुण्ड्रमालिखेत्त द्विरेखं भवति भूयस्स्वयं ब्रह्मणस्सायुज्यं सलोकतां जयति य एवं वेद ॥ १
अथ कात्यायनेनिहोवाच 'ज्ञानं वै पुरुषो ब्राह्मणो जायते । स वैसद्ब्राह्मणो भवति वसिष्ठः काश्यपोऽग्निर्जमदग्निर्विश्वामित्रोऽयं व्यासः पाराशर्यस्सनका-

दयो स ब्रह्मलोको भवति तप्तं चक्रं द्विभुजे धार्यमिति सविष्णुर्लोको भवति य एवं वेद ॥ २ ॥ अथ कात्यायनेतिहोवाच । आदित्यः पुरुषस्स आदित्यः कस्मिन्प्रतिष्ठितं चाध्यात्मं प्रतिष्ठित वेद प्रतितिष्ठति प्रजापशुभिः यस्मिन् लोकेऽमृतत्वमिति पापः पापं हरति सुदर्शनं धार्यमित्यूर्ध्वपुण्ड्रं द्विरेखं भवति ब्रह्मणस्सायुज्यग्ं सलोकतां जयति य एवं वेद ॥ ३ ॥ अथ कात्यायनेतिहोवाच । आप एवं यस्यायतनं हृदयं लोको मनो ज्योतिर्वैतं पुरुषं विद्यात् सर्वस्यात्मनः परायणं नारायणं पुरुषं सर्वस्यात्मनः परायणं विष्णुरेव भवति । सतप्तं चक्रं द्विभुजे धार्यमिति ब्रह्मणस्सायुज्यगँ सलोकतां जयति य एवं वेद ॥ ४ ॥

अथ कात्यायनेति होवाच । इदं वै तत्पुरुषस्य परायणो भवति तप्तं चक्रं द्विभुजे धार्यमिति इमामेव गौतम भरद्वाजा वयमेव गौतमोऽयमेव भरद्वाज इमामेव विश्वामित्रजमदग्नी इमामेव वसिष्ठकश्यपा वयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाह्यान्नमद्यतैतद्यदत्तीति तस्यैव सर्वस्यात्ता भवति सर्वमस्यान्नं भवति स विष्णुरेव भवति य एवं वेद ॥ ५॥

अथ कात्यायनेतिहोवाच । पृच्छामि त्वा परमं तं पृथिव्याः पृच्छामि यत्र पुरुषस्य नाभि ब्रह्मणो जायत इति देवासः पितरो येन विधृतेन बाहुना सुदर्शनं धार्यमिति प्रयतास्स्वर्गमायन् येनांकिता मनवो लोकसृष्टिं वितन्वन्ति ब्राह्मणास्तद्वहन्ति अग्निना वै होत्रा तप्तं चक्रं द्विभुजे धार्यमित्यूर्ध्वपुण्ड्रमालिखेत्तद्द्विरेखं भवति पुनरागमनं नयति ब्रह्मणस्सायुज्यगं सलोकतां जयति य एवं वेद ॥६॥

अथ कात्यायन इति होवाच । विष्णुरिन्द्रो वै देव इन्द्रो वा नारायणोऽनुजायते किंदेवतोऽस्यां विष्णुदेवत इति स विष्णुः कस्मिन् प्रतिष्ठित इति रूपाणि पश्यति कस्मिन् रूपाणि प्रतिष्ठितानीति हृदय इतिहोवाच तप्तं चक्रं द्विभुजे धार्यमिति ब्रह्मणस्सायुज्यगँ सलोकतां जयति य एवं वेद ॥ ७ ॥

अथ कात्यायनेतिहोवाच । परमपुरुषो ह वै देवा मनो वै ब्रह्म मनोनन्तानन्तलोके निवसति ब्राह्मणास्तद्वहन्तीत्यग्निना वै होत्रा तप्तं तुरात्यापो रीत्यापोऽन्तरिक्षस्समुद्रं गच्छन्त्यापो वै देवा ब्राह्मणाः केशवं प्रति गच्छन्ति ॥

अथ कात्यायनेतिहोवाच । पुरुषश्चन्द्रस्सादित्यः कस्मिन्प्रतिष्ठित इति आदित्योऽन्तःपुरुषस्य देवस्य देवनादिगुणयुक्तस्य स हिरण्यगर्भोपाध्यवच्छिन्नेति ब्राह्मणा भगवन्तः यो वः कामयते मनो वै काम मनोऽनन्ता मनो वै

ब्रह्म मनो वै विष्णुरिति ब्राह्मणा धारयन्त्यूर्ध्वपुण्ड्रं द्विरेखं भवति ब्रह्मणस्सायुज्यगँ सलोकतां जयति य एवं वेद ॥ ९ ॥

अथ कात्यायनेतिहोवाच । सर्वं तदिदं सर्वात्मनः परायणं नारायणं महाज्ञेयं विश्वात्मानं परायणमिति देवो भूत्वा देवासः पितरो विदुरित्यात्मा गुहायां निहितोऽस्येत्यन्तर्यामिवर्म दयस्व स्वाहोर्वन्तरिक्षमन्वेति स्वांकृतोऽसीति ब्रह्मणेतिहोवाच तप्तं चक्रं द्विभुजे धार्यमिति ब्रह्मणस्सायुज्यगँ सलोकतां जयति य एवं वेद ॥ १० ॥

तत्रैवोत्तरत्र 'दिवस्पतेऽस्य सुविततं पवित्रं यस्य दक्षिणे तप्यते सम्यक्चक्रं बिभर्ति रागा इति ॥ 'दक्षिणे तु भुजे, 'धृतोर्ध्वपुण्ड्रः, 'प्रते विष्णो 'निचिक्षेर, 'चमूषज्येन, 'एभिर्वयं, 'चक्रं बिभर्ति, 'पवित्रामित्यग्निः, 'पवित्रं ते, 'चरणं पवित्रं, 'अथ कात्यायनेति, एताः श्रुतयः सच्चरित्ररक्षायां श्रीमन्निगमान्तमहादेशिकैः सोपबृंहणतया सुदर्शनादिधारणे विनियुज्यन्त इति विस्तरेण सार्थं प्रतिपादिताः ॥

महाचार्यैश्च पूर्वोक्तास्श्रुतयः शतपथब्राह्मण विद्याविजये उदाहृताः । एतदन्यास्श्रुतयः तप्तचन्द्रिकादिषु बहुशस्सन्ति विस्तरभयान्न लिखिताः । सच्चरित्ररक्षायां 'चमूषत' इत्यादेरर्थः प्रदर्शितः । यथा—द्रप्सः—भगवद्विभूत्येकदेशः श्येनः श्येनसजातीयः शकुनः पक्षी वैन तेय इत्यर्थः । वैनतेयस्य कर्माधीनपदलाभत्वकथनं कर्मवश्यत्वाभिनयकृतम् । यद्वाऽन्योऽत्र श्येनसजातीयः पक्षी विवक्षितः । गांविन्दतीति गोविन्दः । गोशब्देन महीप्रभावादयो विवक्षिताः । 'गवादिषु विन्देर्न संज्ञायाम्' इति छान्दसत्वात्तुज्वद्भावः । ऋन्नन्तता वा । तस्यायुधानिक्षिप्त्वाङ्कनरूपेण सार्वकालीनत्वलक्षणविशेषं बिभृत्वा धारयित्वा. बिभृत्वेति क्तिन्नन्तं इदं पदम् । चमूषत् अभूत् भगवत्सेवाधुरन्धरोऽभूदित्यर्थः । यद्वा चमूशब्देन नित्यसूरिपरिषद्विवक्षिता । तत्सीदतीति चमूषन्नित्यसूरिपरिषन्मध्यवर्तीत्यर्थः । क्रियाऽपेक्षायामभूदिति योग्यक्रियाऽध्याहारः । आयुधानि पञ्चायुधानि बिभ्रत् । एवमपां मूर्ति समुद्रं सचमानः अन्योऽपि कश्चिद्भगवच्छरीरतया द्रप्सः तदंशभूतो जीवः संसारोत्तितीर्षया भगवदीयानि पञ्चायुधानि बिभ्रत् । तत एव महिषः पूजित मह पूजायाम्, इति धातोः 'अपि महोष्टिषच्, इति टिषच् । अपां समुद्रं

सागरं ऊर्मिमत्त्वात् लक्षणया ऊर्मिमित्युच्यते । अचिद्द्रव्यसम्बन्धिनमूर्मिमन्तं संसारसागरमित्यर्थः । समुद्रं समुद्रिक्तं अचिद्द्रव्यसम्बन्धिनमूर्मिशव्दाभिलप्यमशनायादिषट्कं जन्मादि विकारजातं वा । एकवचनं समुदायाभिप्रायम् । अप्छब्देन भूतान्तरस्याप्युपलक्षणम् । सचमानः 'षच-समवाये, इति धातुः । अनुप्रविशन् तन्मध्ये निमज्जन्नित्यर्थः ।

एतेन दुःखसमयसंसारसागरनिमग्नत्वात् तदुत्तितीर्णायोगित्वमस्तीति फलितम् । यथा राजचिह्नधारी राज्ञा जगता च पूज्यते। तद्वदयं भगवच्चिह्नधारी भगवता देवमनुष्यादिनित्यसूरिभिश्च पूज्यत इति भावः ।

तुरीयं चतुर्थं धामतेजः व्यूहत्रयात् जाग्रदादि पदत्रयाद्वा परं वासुदेवसंज्ञं तेज इत्यर्थः । यद्वा कर्मवश्यानां प्राप्यात् स्थानत्रयाद्विलक्षणत्वेन सर्वस्मात्परं मुमुक्षु प्राप्यं परमपदं विवक्ति स्तुत्या सेवते धातूनामनेकार्थत्वात् अत्र योग्यार्थे तात्पर्यमित्यादि सच्चरित्ररक्षायामनुगृहीतम् श्रीमन्निगमान्त गुरुचरणैः—अत्रोदाहृतासु काश्चन श्रुतयः निर्णय सिन्धौ हेमाद्रौ च सुदर्शनादिधारणपरतयोदाहृताः ॥

तत्र वृद्धमनुः—

ऊर्ध्वपुण्ड्रं तथा चक्रं नित्यं धारयते तु यः ।
तेन तस्याशुभं नश्येत् शुभं तस्य प्रवर्धते ॥ इति

शाण्डिल्यः—

पशुपुत्रादिकं सर्वं गृहोपकरणानि च ।
अङ्कयेच्छङ्खचक्राभ्यां नामकुर्याच्च वैष्णवम् ॥

विष्णुधर्मे यमकिंकरसंवादे—

भवतां भ्रमतामत्र विष्णुसंश्रयमुद्रया ।
विनाऽऽज्ञाभङ्गकृन्नैव भविष्यति नरः क्वचित् ॥ इति

मात्स्ये—

मच्चक्रांकितदेहोयं मद्भक्तो भुवि दुर्लभः ।
नैवाप्नोति वशं मृत्योरप्याज्ञा भङ्गकृन्नरः ॥
नान्यं देवं नमस्कुर्यान्नान्यं देवं निरीक्षयेत् ।
चक्रांकितः सदा तिष्ठेन्मद्भक्तः पाण्डुनन्दन ॥

श्रीविष्णुतत्वे—

चक्रादिधारणं पुंसां पर सम्बन्धवर्धनम् ।
पतिव्रता निमित्तं हि वलयादि विभूषणम् ॥
वैष्णवेभ्योपि बिभ्यन्ति देवा नरकरक्षकाः ।
(पा) चक्रांकितेभ्यो बिभ्यन्ति देवा नरकरक्षकाः ॥
अवमानक्रिया तेषां संहरत्यखिलं जगत् ।
कालेनैतावता तेषु नरकेषु कथञ्चन ॥
न दृश्यते महावीरप्रभवात्परमेष्ठिनः । इति

न दृश्यत इत्यत्र सामर्थ्यादेषु निवास इत्यध्याहर्तव्यम् — इतिहाससमुच्चये पुण्डरीकाख्याने ॥

केचित् चक्रांकितस्तत्र प्राणिनःपुण्यदर्शिनः ॥
विचरन्ति यथा कामं पुण्यतीर्थप्रशंसिनः । इति

तत्रैव—नारदोहमिह प्राप्तस्त्वद्दर्शनकुतूहलात् ॥

प्रभवो भगवद्भक्ता मादृशां सततं द्विज ।
स्मृतस्सम्भाषितो वापि पूजितो वा द्विजोत्तम ॥
पुनातिभगवद्भक्तश्चण्डालोपि यदृच्छया । इति

भीष्म पर्वणि—

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ॥
अर्चनीयश्च सेव्यश्च नित्ययुक्तैः स्वकर्मसु ।
सात्वतं विधिमास्थाय गीतस्संकर्षणेन यः ॥ इति

श्री विष्णुतत्वे तृतीये पादे—

एवं हि ज्ञापिता विष्णोश्चक्रचिह्नसमन्विताः ।
देवा एव भवन्त्येते नान्येषां कर्मकारकाः ॥ इति

तत्रैव नवम पटले—

संस्कारव्यञ्जितात्मानः पानिचिह्नेन लांछिताः ।
देवाभिधानवन्तश्च त्यक्तास्पदपरिग्रहाः ॥
तमेव सर्वभावेन संप्रयाति महामुने । इति

अन्तिमे पटले—

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ॥
एतेह्याश्रमिणः प्रोक्ताः चत्वारः क्रमयोगतः । इत्यारभ्य

चक्रचिह्नधराः सर्वे समय व्रतनिष्ठिताः ॥ इति

पराशर संहितायाम्—

श्रोत्रियो विष्णुभक्तस्तु गृहस्थः शास्त्रवित्तमः ।
चक्रचिह्नधरो विप्रः प्रतिष्ठां कर्तुमर्हति ॥
तेन प्रतिष्ठितः तत्र सान्निधत्ते सदा (सदा) हरिः ।
देवतान्तरभक्तो वा समबुद्धिरथापि वा ॥
नास्तिको वेदहीनो वा न प्रतिष्ठां समाचरेत् ।

नारदीय पद्धतौ च—

गृहस्थः श्रोत्रियो विप्रो नित्यकर्मरतश्शुचिः ॥
शान्तश्चक्रधरो दान्तः सद्भक्तो विजितेन्द्रियः ।
शास्त्रज्ञः कर्मदक्षश्च प्रतिष्ठां कर्तुमर्हति ॥ इति

भारतोदाहरणे कृत लक्षणैरित्यत्र लक्षण शब्दस्य सामान्यत्वेपि सात्वततन्त्र-विहितलक्षणपर परत्वात्तत्र तप्तचक्रांङ्कनस्य विहितत्वात् तत्परत्वमेव ॥

पाद्मे—

धारयेद्विष्णुभक्तस्तु चक्रं बाहौ तु दक्षिणे ।
वामे तु शङ्खराजन्तं ततो वै विष्णुमाप्नुयात् ॥
चक्रेणैवांकितो विद्वान् वासुदेवं समाश्रयेत् ।
भावभक्तिं समास्थाय ब्रह्मलोकं प्रयास्यति ॥ इति

आग्नेय पुराणे—

पञ्चायुधानि धार्याणि भक्तिश्रद्धोपबृंहितैः ।
ललाटे मूर्ध्नि हृदये बाह्वोरेकं पृथक् पृथक् ॥
ललाटे तु गदा धार्या मूर्ध्नि चापं ततः परम् ।
नन्दकञ्चैव हृन्मध्ये शङ्खचक्रे भुजद्वये ॥
यथा च विधिवत् कृत्वा पञ्चायुधविधानतः ।
तत्तन्मन्त्रेण मन्त्रज्ञाः प्रतिष्ठाप्य पृथक् पृथक् ॥
वह्निमध्ये समारोप्य विधिवत् पूजयेत्ततः ।
अङ्कयेत् विधिवत् ब्रह्मन्नप्रमत्तः समाहितः ॥
वर्णाश्रमेषु निष्ठानां अन्येषां च विशेषतः ।
कर्तव्यं भगवद्भक्तैः सिद्धैर्मुग्धैश्च योगिभिः ॥

चक्रादिधारणात् ब्रह्मन् विष्णुलोके महीयते ।

इति भविष्यपुराणे—

चक्रांकितभुजं दृष्ट्वा यस्तु तं नाभिनन्दयेत् ॥
तिर्यग्योनि शतं प्राप्य विष्ठायां जायते क्रिमिः ।

ब्रह्मवैवर्ते—

विष्णुचक्रांकितं मर्त्यं यो निन्दयति सर्वदा ॥
स याति नरकं घोरं यावदाभूत संप्लवम् ।

लैङ्गे—

अष्टाक्षरविदः सर्वे विष्णुचक्रांकितास्तथा ॥
श्रावका वासुदेवस्य तथैव नटनर्तकाः ।
अन्ये च वैष्णवास्तत्र सर्वे चक्रेण लाञ्छिताः ॥

श्री वाराहे—

वासुदेवाङ्कनं कुर्यादात्मनो बाहुमूलयोः ।
सोऽश्वमेधफलं प्राप्य विष्णुलोके महीयते ॥

तत्रैव क्षेत्रमाहात्म्ये—

मच्चक्रांकितदेहो यो मद्भक्तो भुवि दुर्लभः ।
मामेवैष्यति धर्मात्मा मदेकान्तेन चेतसा ॥
चक्रांकितभुजाः केचिद्यत्र यत्र वसन्ति वै ।
योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे ॥
ये केचिद्यत्र पुरुषा विष्णुचक्रांकमुद्रिताः ।
तेषां दर्शनमात्रेण महापातकनाशनम् ॥
भूतप्रेतपिशाचाश्च डाकिन्यश्च वसुन्धरे ।
सर्वं तत्प्रशमं याति यत्र चक्रांकितो वसेत् ॥

स्कान्दे च यमवचनम्—

येषां चक्रांकितं गात्रं शूद्रेष्वपि च दृश्यते ।
ते वै स्वर्गस्य नेतारो ब्राह्मणा भुवि देवताः ॥

वामने—

लीलयापि लिखेद्यस्तु बाहुमूले सुदर्शनम् ।
कुलकोटिं समुद्धृत्य सगच्छेद्वैष्णवं पदम् ॥

मात्स्ये–

चक्रांकितभुजाः केचिच्छंखचक्रधरास्तथा ।
पद्मायुधधराः केचित् कुले विष्णुपरिग्रहे ॥
शङ्खचक्रांकनं कुर्यान् आत्मनो बाहुमूलयोः ।
कलत्रापत्यभृत्येषु पश्वादिष्वपि मुक्तये ॥
मच्चक्रांकितदेहोयं मद्भक्तो भुवि दुर्लभः ।
नैवाप्नोति वशं मृत्यो रप्याज्ञाभङ्गकृन्नरः ॥

गारुडे––

विष्वक्सेनःस्वयं चक्रं आदायात्मविभूषणम् ।
प्रयच्छति महातेजा हरिभक्तानुकम्पया ॥
विष्णुचक्रांकितं गात्रं पवित्रमिति वैश्रुतिः ।
चक्रांकिताय दातव्यं हव्यकव्यं द्विजोत्तमैः ॥ इति

तत्रैव–अग्निनैव तु सन्तप्तं चक्रमादाय वैष्णवः ।
दाहयेत्सर्ववर्णानां हरिसालोक्य सिद्धये ॥

तत्रैव प्रथमेऽध्याये––

वैष्णवाः मुनयः पुण्य विष्णु लक्षण लक्षिताः ।
ध्यानिनो योगनिरताः सदा विष्णुपरायणाः ॥

उमामहेश्वर संवादे––

शङ्खचक्रांकितान् भक्त्याऽन्यः पूजयति मानवः ।
स साक्षाद्विष्णु सामीप्यं लभते नात्र संशयः ॥

वायव्ये–

उपवीतादिवद्धार्याः शङ्खचक्रादयस्तथा ।
ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥

आदित्य पुराणे–

चक्रादि धारयेद्विप्रो ललाटे मस्तके भुजे ।
पातकादि विशुद्ध्यर्थं भवक्लेशविनाशनम् ॥
विहगेशशनामाङ्कारशङ्खचक्राङ्किता नराः ।
निश्शङ्काश्च निरातंकाः ते सङ्कर्षणकिंकराः ॥ इति

यमस्मृतौ–उपवीतं शिखाबन्धं चक्रलाञ्छनसंयुतम् । इत्यादि

शङ्खस्मृतौ–

उपवीतादिवद्धार्याः शङ्खचक्रादयः सदा ।
ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥

हारीत स्मृतौ–

प्रतप्त शङ्खचक्रादि हेतिभिः मन्त्रमुच्चरन् ।
दक्षिणे तु भुजे चक्रं वामांसे शङ्खमेव च ॥
गदां च बाहुमध्ये तु हृदये नन्दकं तथा ।
मस्तके तु तथा शार्ङ्गं अङ्कयेद्विमलं तथा ॥
एवं तापक्रिया कार्या वैष्णवी कलुषापहा ।
प्रधानं वैष्णवं तत्र तापसंस्कार उच्यते ॥
तापसंस्कारमात्रेण परिशुद्धिमवाप्नुयात् ।
केचित्तु शङ्खचक्रे द्वे प्रतप्ते बाहुमूलयोः ॥
धारयन्ति महात्मानः चक्रमेकं तु धारयेत् ।
वैष्णवानान्तु हेतीनां प्रधानं चक्रमुच्यते ॥
तेनैव बाहुमूले तु प्रतप्तेनांकयेद्बुधः ।
अनङ्कयित्वा चक्रेण यत्किंचित्कर्मसञ्चरेत् ॥
तत्सर्वं याति विफलमिष्टापूर्तादिकं नृप ।
अचक्रधारणो विप्रः सर्वकर्मसु गर्हितः ॥
अवैष्णवत्वमापन्नो नरकं चैव गच्छति ।
चक्रचिह्नादि रहितं प्राकृतं कलुषान्वितम् ॥
अवैष्णवन्तु तं दूरात् श्वपाकमिव संत्यजेत् ।
तस्माच्चक्रं विधानेन तप्तं वैधारयेत् द्विजः ॥
सर्वाश्रमेषु वसतां स्त्रीणाञ्च श्रुति चोदनात् ।
अनायुधा सो असुरा अदेवा इति वै श्रुतिः ॥
चक्रेण ता वर्प इत्यृचा समुदाहृतम् ।
अपेत्यङ्कनमित्युक्तं वपेति ग्रहणं तथा ॥
अस्माद्वै तप्तचक्रस्य ह्यंकनं मुनिभिः स्मृतम् ।
पवित्रं विततं ब्रह्म प्रभोः गात्रेषु लाञ्छितम् ॥
(धारितं) श्रुत्यैव चांकयेद्गात्रे तद्ब्रह्मसमवाप्तये ।

यत्ते पवित्रमार्चिष्यग्ने विततमन्तरा ॥
पुनीहितेनैव ब्रह्मन्नोर्हाति श्रुति चोदितम् ।
पवित्रमिति चैवाग्निः अग्निर्वै चक्रमुच्यते ॥
अग्निर्वै सहस्रारः सहस्रारो नेमिरुच्यते ।
नेमिना तप्ततनुर्यो ब्रह्मणा समतां व्रजेत् ॥
यत्ते पवित्रमार्चिष्यग्ने तेन पुनीहि मा ।
दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ॥
वामे तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ।
इत्यादिश्रुतिभिः प्रोक्तं विष्णोश्चक्रस्य धारणम् ॥
पुराणेष्वितिहासेषु सात्विकेषु स्मृतिष्वपि ।
शङ्खचक्रोर्ध्वपुण्ड्रादि रहितं ब्राह्मणं नृप ॥
यः श्राद्धे भोजयेद्विप्रः पितॄणां तस्य दुर्गतिः ।
शङ्खचक्रोर्ध्वपुण्ड्रादि चिह्नैः प्रियतमैः हरेः ॥
रहितस्सर्व धर्मेभ्यः प्रच्युतो नैनमाप्नुयात् ।

पाद्मे—एवमुक्त्वा विधातारं देवदेवो हरिः पिता ॥
सचक्रेणांकयित्वा तं तस्य मन्त्रमदात्स्वयम् ।
सर्व लोकेश्वरो देवो ब्रह्मा मम पिता प्रभुः ॥
ममापि विधिवन्मन्त्रं प्रददौ मुनिसत्तमः ।
तस्माद्यूयं मुनिश्रेष्ठा धारयध्वं सुदर्शनम् ॥ इति

तत्रैव- शङ्खं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा ।
धारयित्वैव विधिवद्ब्रह्मकर्म समारभेत् ॥
सुदर्शनं धारयित्वा वह्नितप्तं द्विजोत्तमः ।
उपनीयविधानेन पश्चात्कर्मसु योजयेत् ॥
दद्याद्गोभूहिरण्यादि चक्रांकितभुजाय वै । इति
वैष्णवत्वस्य सिद्ध्यर्थं ज्ञानसिद्ध्यै विशेषतः ॥
प्रतपेच्छङ्खचक्राभ्यां हुत्वा होमं विधानतः । इति
अन्यैर्नदाहयेद्गात्रं ब्राह्मणो हरिलांछनात् ॥
शङ्खचक्रगदाखड्गशार्ङ्गादन्यैः हरेरपि ।
न लक्षणैः दहेदङ्गं नान्यदग्धोर्हतिक्रियाम् ॥

अचक्रधारिणं विप्रं दूरतः परिवर्जयेत् ।

तत्रैव– निर्मलांशा दया युक्ताः शुक्लदन्ता दृढव्रताः ॥

अङ्किताश्चैव चक्रेण देव देवस्य चक्रिणः । इति

मार्कण्डेये—

शङ्खचक्रांकनं कुर्यादात्मनो भुजमूलयोः ।

सोऽश्वमेधशतं प्राप्य परं निर्वाणमृच्छति ॥

तद्धारणान्महापापैः मुच्यते नात्र संशयः ।

ब्राह्मे—

शरीरं दृश्यते यस्य कृष्णचक्रेण लांछितम् ॥

गङ्गाजलमयं मन्ये देहं तत्पापवर्जितम् । इति

तत्रैव–विष्णुचक्रांकितं विप्रं यो भूम्यामभिवादयेत् ।

ललाटपांसु संख्यानि ब्रह्मलोके महीयते ॥

विष्णुचक्रांकितं दृष्ट्वा योऽभ्युत्थाय कृताञ्जलिः ।

स्वकीयं कुलमुद्धृत्य ब्रह्मलोके महीयते ॥

चक्रांकितभुजा यस्मिन् पङ्क्तिमध्ये तु भुञ्जते ।

सा पङ्क्तिस्स्वर्गलोकेषु देवपङ्क्तिषु युज्यते ॥

शङ्खचक्रांकितं विप्रं दृष्ट्वा यो ह्यादृतो भवेत् ।

परमानन्दमाप्नोति किं पुनस्त्वैहिकं फलम् ॥

ये केचिद्यत्र पुरुषा विष्णुचक्रेण मुद्रिताः ।

तेषां दर्शनमात्रेण महापातकनाशनम् ॥

चक्रांकितस्य नामानि यो वदेद्भक्तिमान्नरः ।

सर्वपातकनिर्मुक्तः स याति परमं पदम् ॥

अग्नितप्तेन चक्रेण बाहुमूले तु लांछिताः ।

रौरवाद्वंशमुद्धृत्य यान्ति विष्णोः परं पदम् ॥

विष्णुचक्रांकिता यत्र वसन्ति नरपुंगवाः ।

तद्देशोत्पन्नमात्राश्च वैष्णवत्वं व्रजन्ति ते ॥

विष्णुचक्रांकितं विप्रं एकरात्रन्तु वासयेत् ।

विष्णुलोकनिवासैस्तु पूज्य एव नसंशयः ॥

विष्णुभक्तियुता मुख्याः शङ्खचक्रादि लांछिताः ।

क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमो मतः ॥
यस्मिंस्तीर्थे कृतस्नाना वैष्णवाश्चक्रलांछिताः ।
तस्मिन् स्नानं प्रकुर्वीत विष्णुलोकमवाप्नुयात् ॥
अतिपापप्रसक्तोपि विष्णुचक्राङ्कितस्य तु ।
पादोदकं पिबेद्यस्तु सर्व पापैः प्रमुच्यते ॥
शङ्खचक्राङ्कितान् विप्रान् यः पूजयति मानवः ।
स साक्षात् विष्णुसालोक्यं लभते नात्र संशयः ॥

ब्रह्माण्डे—

ततः प्रभृति शक्राद्याः सर्वे देवा मुनीश्वराः ।
चिह्नं कृष्णायुधानान्तु नित्यं कुर्वन्ति हि श्रुतम् ॥
ऋषयः सिद्धगन्धर्वाः पाताळे पन्नगेश्वराः ।
देहे कुर्वन्ति नियतं शङ्खचक्रादि लांछितम् ॥
तस्मात् त्वमपि देवर्षे कुरु कृष्णायुधांकितम् ।
स्वदेहं तव सर्वत्र सर्व सिद्धिः भविष्यति ॥

स्कांदे 'पृथु सनत्कुमार संवादे' पृथुः—

सुदर्शनस्य माहात्म्यं वैष्णवानां महामुने ।
वक्तुमर्हसि सर्वज्ञ परं कौतूहलं हि मे ॥

सनत्कुमारः—

शङ्खचक्रांकितं दृष्ट्वा देवताः पितरो ग्रहाः ।
इच्छन्ति मङ्गळं नित्यं तुष्टाः तस्य परं भुवि ॥
कृष्णायुधैः लांछितानां मृत्युः नाभिभवेत् क्वचित् ।
विदेशेपि भवेन्मुक्तिः पातकैः वे(ष्ट)ष्टितामपि ॥
उपसर्गाः क्षयं यांति रोगा नश्यन्ति दूरतः ।
दृष्ट्वा चक्रांकितं देहं विमुखा यांति शत्रवः ॥
वृत्रेण निर्जिताः सर्वे पुरा देवाः स वासवाः ।
ब्रह्मादयो गताभूप शङ्करप्रमुखाः तथा ॥
त्राहि त्राहि जगन्नाथ वृत्रेण विजिता वयम् ।

श्री भगवानुवाच—

ममायुधांस्तु देहेषु लांछयित्वा सुरोत्तमाः ॥
युध्यन्तां समरे दैत्यान् मत्प्रसादेन भूयसा ।
मदायुधांकितान् दृष्ट्वा भवतः सुरशत्रवः ॥
क्षयं यास्यन्ति समरे मत्प्रसादात्सुरेश्वराः ।
प्रणामं दण्डवद्भूमौ ब्रह्मरुद्रपुरोगमाः ॥
हत्वा(हृत्वा) वृत्रं गता देवाः स्वस्थानन्तु मुदान्विताः ।
तदा प्रभृति ब्रह्माद्याः सर्वे देवाः स वासवाः ॥
ऋषयः सिद्धगन्धर्वाः पाताळे पन्नगेश्वराः ।
वह्नि तप्तं हरेश्चक्रं शङ्खश्चैव विधानतः ॥
धारयन्ति मुदा युक्ता वृत्रस्य जयकांक्षिणः ।
तस्मात् त्वमपि राजेन्द्र कुरु कृष्णायुधांकितम् ॥
स्वदेह निजसंग्रामे ह्यजेयस्त्वं भविष्यसि ।
कृष्णचक्रांकितो भूत्वा संग्रामे प्रविशेद्यदि ॥
विजित्य च रिपून् सर्वान् स्वदेशं प्राप्नुयात् नृप ।

पाद्मे—

सुदर्शनं पाञ्चजन्यं सुवर्णेन प्रकारयेत् ॥
रौप्येण वापि ताम्रेण कांस्येनापि प्रकारयेत् ।
आचारादीनभिप्राप्तः प्राप्तो वा भूरिदक्षिणाम् ॥
अङ्गोपाङ्गैश्च संयुक्तः कृतोपि न कृतो भवेत् ।

हारीत स्मृतौ—

रागसन्दग्धगात्राणां न स्यात् पारत्रिकं शुभम् ॥

अन्यत्र—

ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ।
चक्रांकितस्य निंदा च पञ्चैतेत्यतिपातकाः ॥
विष्णुचक्रांकितो विद्वान् यस्मिन् देशे वसेत्सुखम् ।
स तु वै मत्प्रियःपुण्यो वैष्णवानामपि प्रियः ॥
विष्णुचक्रांकिता विप्रा शङ्खचक्रांकिताश्च वा ।
क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमोमतः ॥

तीर्थस्नानफलं नास्ति यागदानफलं तथा ।
अवैष्णवे तथा विप्रे सर्वं शश्वद्विनश्यति ॥
यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।
अवैष्णवस्तथा विप्रः ततो व्यर्थो भविष्यति ॥

हारीत स्मृतौ—

शङ्खचक्रोर्ध्वपुण्ड्रादि धारणं वाऽस्य लक्षणम् ।
तन्नामकरणञ्चैव वैष्णवं तदिहोच्यते ॥
अवैष्णवास्तु ये विप्राः चण्डालादधमा स्मृताः ।
तेषां तु नरके वासः कल्पकोटिशतैरपि ॥
तापादिपञ्चसंस्कारी मन्त्ररत्नार्थतत्त्ववित् ।
वैष्णवः स जगत्पूज्यो याति विष्णोः परं पदम् ॥
अचक्रधारी विप्रश्च बहुवेदश्रुतोऽपि वा ।
स जीवन्नैव चण्डालो मृतो निरयमाप्नुयात् ॥
तस्मात्तापादिसंस्काराः कर्तव्या धर्मकांक्षिणाम् ।
अयमेव परो धर्मः प्रधानं सर्वकर्मणाम् ॥
संस्काराणान्तु सर्वेषामाद्यं चक्रादि धारणम् ।
तत्कर्तव्यं हि सर्वेषां विधिना वै द्विजन्मनाम् ॥

उत्तर पराशरस्मृतौ—

संस्काराः पञ्चकर्तव्याः ब्राह्मणस्य विधानतः ।
विना यज्ञोपवीतेन विना चक्रस्य धारणम् ॥
विना द्वयेन वै विप्रः चण्डालत्वमवाप्नुयात् ।
आद्यन्तु शङ्खचक्रादि धारणं वैष्णवं स्मृतम् ॥
पौंड्रं नामक्रिया चैव मन्त्रश्चैवार्चनं हरेः ।
संस्काराः पञ्चकर्तव्याः ब्राह्मणस्य विधानतः ॥
विधिना शङ्खचक्रादि धारयेदूर्ध्वपुण्ड्रकम् ।
अचक्रधारिणं विप्रं यः श्राद्धे भोजयिष्यति ॥
रेतो मूत्रपुरीषाणि सपितृभ्यः प्रयच्छति ।
तस्माच्चक्रादि संस्काराः कर्तव्या मुनिसत्तमाः ॥
चक्रलांछनहीनेन कृतं कर्म च निष्फलम् ।

हरिवम्शे—

चक्रांकिताः प्रवेष्टव्या यावदागमनं मम ॥

अत्र केषुचित्पुस्तुकेषु 'नामुद्रिता' इति पूर्वार्धतया, चक्रांकिता इत्युत्तरार्धतया पाठः॥

ब्रह्म पुराणे—

आद्यन्तु वैष्णवं प्रोक्तं शङ्खचक्रादि लांछनम् ।
धारणञ्चोर्ध्वपुण्ड्राणां तन्मन्त्राणां परिग्रहः ॥
शङ्खचक्रांकनं कुर्यात् आत्मनो बाहुमूलयोः ।
हुताग्निनैव संतप्य सर्वपापापनुत्तये ॥
अग्नितप्तं पवित्रं च धृत्वा वै बाहुमूलयोः ।
त्यक्त्वा यमपुरं घोरं याति विष्णोः परं पदम् ॥
शङ्खचक्रादिहीनस्तु यः पूजयति केशवम् ।
तत्सर्वं विफलं याति पूजामन्त्रजपादिकम् ॥
अग्नितप्तेन चक्रेण ब्राह्मणो बाहुमूलयोः ।
अङ्कयित्वा जपेन्मन्त्रं संसारान्मोक्षवान् भवेत् ॥
सुदर्शनं धारयित्वा वह्नितप्तं द्विजोत्तमः ।
उपनीयविधानेन पश्चात्कर्मसु योजयेत् ॥
चक्रचिह्नविहीनन्तु यः श्राद्धे भोजयिष्यति ।
व्यर्थं भवति तत्सर्वं निराशाः पितरो गताः ॥
विष्णुचक्रांकितं विप्रं भोजयेच्छ्राद्धकर्मणि ।
विष्णुचिह्नविहीनन्तु प्रयत्नेन विवर्जयेत् ॥
हुताग्नितप्तचक्रेण शरीरं यस्य चिह्नितम् ।
तस्य तीर्थानि यज्ञाश्च लभन्ते नात्र संशयः ॥
अग्नितप्तेन चक्रेण बाहुमूले तु लांछिताः ।
सर्वपापविनिर्मुक्ता यान्ति विष्णोः परं पदम् ॥
सर्ववेदविनीतश्च सर्वशास्त्रविशारदः ।
अधृत्वा विधिना चक्रं ब्राह्मणः पतितो भवेत् ॥

नारदीये—

अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा ।

ब्राह्मणस्य तथा नित्यं तप्तचक्रांकधारणम् ॥

शाण्डिल्यः—

कारयित्वा सुवर्णेन पञ्चायुधगणं हरेः ।
बध्नीयात् कण्ठदेशेषु बालानां सूतिकागृहे ॥
नामुद्रये दासनानि शयनानि महीतलम् ।
स्थापयेत् क्षेत्रमध्ये तु शिलां चक्रादिमुद्रिताम् ॥
मुक्तामणिसुवर्णाद्यैः कृत्वा चक्रादिभूषणम् ।
यथार्हं विभूयुः सर्वे पुमांसः स्त्रीजनोऽपि वा ॥

श्री विष्णुमन्दिरे प्रतिऽष्टाध्याये—

प्रतिष्ठादिवसं ज्ञात्वा ऋत्विग्भिः द्विजसत्तमैः ।
एकांति मुनि मुख्यैश्च कृतचक्रादिलक्षणैः ॥
यजमानः प्रकुर्वीत वेद्यादि स्थापनं पुरः । इति

पारमेश्वरे च—

येषु व्यक्तेषु चिह्नानि नाभिव्यक्तानि सत्तमः ।
तान्यपि स्वानि चिह्नानि ललाटेवांसपृष्टयोः ॥
पृष्टेवाप्यंकपट्टे वा पाणिपादतलेषु वा ।
मूर्ध्नि वा दधते तस्मात्तत्र तत्र परीक्षयेत् ॥
तस्मादलक्षणाव्यक्तिः विद्यते न कदाचन ।
एवं तदीया विप्राश्च क्षत्रिया वैश्यजातयः ॥
मौद्गल्याश्च तथाचान्ये न तच्चिह्नविवर्जिताः ।
भवेयुः सर्वदातस्माच्चक्रशङ्खगदांबुजैः ॥
लोहैरनलसंतप्तैः तत्तन्मन्त्राधिवासितैः ।
पूजितैरर्घ्यगन्धाद्यैः अङ्कितव्याः क्षणेन तु (ते) ॥

क्षणेन सावधानेनेति ब्रह्मविधानेनेति ब्रह्मविद्याविजये महाचार्याः—

त्र्यन्त ज्ञानसम्पन्ना यथोक्ताचारनिष्ठिताः ।
विप्रास्तेऽपि च शूद्राश्च यथैवं कृतलक्षणाः ॥
तथापि योग्या विज्ञेयाः समयश्रवणादिषु ।
शास्त्रोदितासु सर्वासु सामग्रीषु महामते ॥
योगोपकरणान्येवमर्घ्यपाद्यादिकान्यपि ।

लांछितानि यथा योग्यं शङ्खचक्रादि लक्षणैः ॥
तथा यानासनादीनि विभोः सर्वाणि यत्नतः ।
आत्मोपकरणं सर्वमासनादि विवर्जितम् ॥
अङ्गुलीयकपर्यन्तं भूषणं कटकादिकम् ।
उत्तमाङ्गसमुद्धार्यं सर्वमुष्णीष पूर्वकम् ॥
चक्रादिलांछनं कुर्यात्तदीयाश्च गवादयः ।
विप्रादिवल्लांछितव्या तदीया भूरुहादयः ॥
लांछितव्या यथा योग शङ्खचक्रादिलांछनैः ।
आराधनार्हाः कर्मण्या एवं चक्रादि लांछिताः ॥
देवतान्तरचिह्नैस्तु अकर्मण्याश्च लांछिताः ।
यत्र वा भगवन्मूर्तेः लांछनं न च दृश्यते ॥
तत्र वै लक्षणन्यासं न कुर्यात् स्वेच्छया द्विज(नृप) ।
यथा स्थितैव सा व्यक्तिः पूज्या व्यापकमन्त्रतः ॥
तदन्ये लांछितव्यास्स्युः सर्वे पूर्वमलांछिताः । इति

श्री सात्वते—

नास्त्रैःवस्त्रैः ध्वजैर्येषां व्यक्तिर्व्यक्ता जगत्रये ।
तेऽपि लांछनवृन्दन्तु धारयन्त्यान्नि गोचरे ॥
ललाटे वांसपट्टे वा पृष्ठे पाणितलद्वये ।
तनूरुहचये मूर्ध्नि कर्मिणां प्रतिपत्तये ॥
अपि संसारिणो जन्तोः स्वभावाद्वैष्णवस्य च ।
न जहात्यच्युतं लिंगं किं पुनर्विभवाकृतेः ॥ इति

सनत्कुमार संहितायाम्—

सर्वपापविनाशस्य रथांगस्य तु धारणम् ।
सर्वकल्याणदमिह पश्चात्संसारनाशनम् (कम्) ॥
सुवर्णरौप्य ताम्राद्यैः लोहेन च तथैव च ।
तथा रथांगमष्टारं सुनाभं च सुवृत्तकम् ॥
ज्वाला चतुष्कसंयुक्तं कृत्वा चैव विधानतः ।
अग्नौ प्रताप्य विधिवद्धारयेद्भक्तिसंयुतः ॥

वासिष्ठसंहितायाम्—

विधिनैव प्रतप्तेन चक्रेणैवांकयेद्भुजम् ।
तथैव बिभृयात् फाले पुण्ड्रं शुभतरं मुदा ॥
बिभृयादुपवीतन्तु सव्यस्कन्धे विधानतः ।
कण्ठे पद्माक्षमालां तु कौशेयं दक्षिणे करे ॥
एभिः चिह्नैर्विना विप्रो न भवेद्धि कथंचन ।
न भवेत्कर्मणां सिद्धिः वैदिकानां विशेषतः ॥

पराशरः—

उपवीतं शिखाबन्धं विप्रस्य सततं स्मृतम् ।
उपवीतं शिखाबन्धमूर्ध्वपुण्ड्रं तथैव च ।
चक्रलांछनहीनस्य विप्रस्य विफलं भवेत् ॥

भारद्वाज संहितायाम्—

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो नारी तथेतरः ।
चक्राद्यैः अङ्कयेद्गात्रं आत्मीयस्याखिलस्य च ॥
अनिष्टानां निवृत्यर्थमैकान्त्याय जगत्पतेः ।
सिद्ध्यर्थं कर्मणां चैव धार्यं चक्रादिलांछनम् ॥
बाह्वोर्ललाटे शिरसि हृदये चाग्रयजन्मनः ।
शङ्खचक्रगदाशार्ङ्गखड्गैर्मन्त्रेण धारयेत् ॥
विष्णोरायतनाग्नौ वा गुरोरात्मन एव च ।
हुते होमादिभिस्तप्तैः स्वरूपरर्चितैः क्रमात् ॥
दासभूतं यदात्मानं बुध्येत परमात्मनः ।
तथैव रात्रं कुर्वीत शङ्खचक्रादिलांछितम् ॥
शङ्खचक्रोर्ध्वपुण्ड्राद्यैः चिह्नैः प्रियतमैः हरेः ।
रहितस्सर्व धर्मेभ्यः प्रच्युतो नैनमाप्नुयात् ॥
चक्रांबुजगदशार्ङ्गखड्गेभ्योऽन्यैः हरेरपि ।
न लक्षणैः दहेद्गात्रं नान्यदग्धोर्हतिक्रियाः ॥
लक्षणानि स्फुटान्येव क्रिया सिद्धिकराणि तु ।
धारयेन्नोपहन्येत कदाचित् किंकरादिभिः ॥

पाद्मे —

धारयेद्विष्णुभक्तस्तु चक्रं बाहौ तु दक्षिणे ।

वामे तु शङ्खराजानं ततोऽयं सिद्धिमाप्नुयात् ॥

वाराहे--

वासुदेवांकनं कुर्यात् आत्मनो बाहुमूलयोः ।
सोऽश्वमेधफलं प्राप्य विष्णुलोके महीयते ॥

गारुडे--

अग्निनैव तु संयुक्तं चक्रमादाय वैष्णवम् ।
दाहयेत्सर्ववर्णानां हरि सालोक्य सिद्धये ॥

ब्राह्मे--

यो नरो मम भक्तस्तु मम चिह्नन्तु धारयेत् ।
श्वपाको वाऽथ गोघ्नो वा मम लोकमवाप्नुयात् ॥

हारीतः--

अचक्रधारी विप्रस्तु सर्वकर्मसु गर्हितः ।
अवैष्णवत्वमापन्नो नरकं चैव गच्छति ॥
चक्रचिह्नादि रहितं प्राकृतं कलुषान्वितम् ।
अवैष्णवन्तु तं दूरात् श्वपाकमिव संत्यजेत् ॥
तस्माच्चक्रं विधानेन तप्तं वै धारयेत् द्विजः ।
सर्वाश्रमेषु वसतां विप्राणां श्रुतिचोदनात् ॥
अनायुधास्ते असुरा अदेवा इति वै श्रुतिः ।

इत्यादि स्मृतीतिहासपुराणवचनानि सन्ति विस्तरभयान्न लिख्यन्ते । अत्रोदाहृतानि वचनानि सच्चरित्ररक्षायां ब्रह्मविद्याविजये प्रमाणसङ्ग्रहे च उदाहृतान्येव । तत्र च पूर्वोदाहृतासु श्रुतिषु–' दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ' इत्यनेन सामान्यतः सुदर्शनादि धारणम् । चक्रं बिभर्ति वपुषाऽभितप्तमिति श्रुत्या तप्तमुद्राधारणम् । एभिर्वयमुरुक्रमस्येति मन्त्रेण पवित्रमित्यग्निरित्यनेन च, अङ्कनलांछनरूपतया विष्णुपदप्राप्ति ब्रह्मसायुज्यादि प्राप्तफलसंबन्धितया च सुदर्शनादि धारणं प्रतीयते । तत्र च इति कर्तव्यता रूपतया

स्वाग्नौ होमं प्रकुर्वीत इध्माधानादि पूर्वकम् ।
पौरुषेण तु सूक्तेन पायसं गुडमिश्रितम् ॥
आज्येन मूलमन्त्रेण हुत्वा चाष्टोत्तरं शतम् ।
वैष्णव्या चैव गायत्र्या जुहुयात्प्रयतो गुरुः ॥

पश्चादग्नौ विनिक्षिप्य चक्राद्यायुधपञ्चकम् ।
पूजयित्वा सहस्रारं ध्यायेत्तद्वह्निमण्डले ॥
षडक्षरेण जुहुयात् आज्यं विंशतिसंख्यया ।
सर्वैश्च हेति मन्त्रैश्चैकैकाज्याहुती क्रमात् ॥
ततः प्रदक्षिणं कृत्वा स शिष्यो वह्निमात्मवान् ।
नमस्कृत्य ततो विष्णुं जप्त्वा मन्त्रवरं शुभम् ॥
प्राङ्मुखं तु समासीनं शिष्यमेकाग्रचेतसम् ।
प्रतपच्छङ्खचक्रादि हेतिभिः मन्त्रमुच्चरन् ॥
दक्षिणे तु भुजे चक्रं वामांसे शङ्खमेव च ।
गदां फालस्य मध्ये तु हृदये नन्दकं तथा ॥
मस्तके तु तथा शार्ङ्गमङ्कयेद्विमलं तथा ।
पश्चात्प्रक्षाल्य तोयेन पुनः पूजां समाचरेत् ॥
होमशेषं समाप्याथ वैष्णवान् भोजयेत्ततः ।
एवं तापक्रियाःकार्याः वैष्णव्यःकलुषापहाः ॥

इत्यादि हारीतादिवचनैः होमपूर्वकमन्त्रसंस्कारादिसंस्कृत चक्रादिधारणस्य विहितत्वात् ॥ अतएवोदाहृतवचनेषु—

यथा च विधिवत्कृत्वा पञ्चायुधविधानतः ।
लोहैरनलसंतप्तैस्तत्तन्मन्त्राधिवासितैः ॥
तत्कर्तव्यं हि सर्वेषां विधिना वै द्विजन्मनाम् ।
जाते पुत्रे पिता स्नात्वा होमं कुर्याद्विधानतः ॥
तस्माच्चक्रं विधानेन तप्तं वै धारयेद्द्विजः ।
सर्वाश्रमेषु वसतां स्त्रीणाञ्च श्रुतिचोदनात् ॥
संस्काराः पञ्चकर्तव्या ब्राह्मणस्य विधानतः ।
हुताग्निनैव संन्तप्य सर्वपापापनुत्तये ॥
हुताग्नितप्तचक्रेण शरीरं यस्य चिह्नितम् ॥

इत्यादिभिः वैदिकाग्नौ संस्कृततप्तमुद्राधारणस्य स्वरसत एव प्रतीतेः। श्रुतिस्मृतीतिहासपुराणवचननिचयपर्यालोचनेन च 'तप्तमुद्राधारणं विहितमित्येव प्रतीयते' इदञ्च तप्तमुद्राधारणं ब्राह्मणादि सर्ववर्णाधिकारमिति—'दक्षिणे तु भुजे विप्र' इति मन्त्रे विप्रशब्देन, शतपथब्राह्मणे षष्ठखण्डे–'देवा सः पितरो

येन वि(ध्य)द्यते । बाहुना सुदर्शनं धार्यमिति प्रय(या)तास्स्वर्गलोकमायन्' इति । येनांकिता मनवो लोकविसृष्टिं वितन्वन्ति ब्राह्मणास्तद्वहन्ति ॥

अग्निना वै होत्रा तप्तं चक्रं द्विभुजे धार्यम्' । इति ॥ तत्रैवाष्टमखण्डे—

'मनो नन्तानन्तलोके निवसन्ति ब्राह्मणास्तद्वहन्ति । अग्निना वै होत्रा तप्ततनुः' इत्यत्र ब्राह्मणशब्देन च ब्राह्मणानां ये गच्छन्ति हि लांछिता अन्ये पुराणाः स एति नाकमिति बिभृयुः ते जना स, इत्येतैस्सर्वेषाञ्च धारणस्य श्रुतिषु प्रतिपन्नत्वेनोदाहृतस्मृतीतिहासपुराणेषु च ॥

श्रोत्रियो वै विष्णुभक्तः चक्रचिह्नधरो विप्रः ।
अङ्कयेद्विधिवद्ब्रह्मन्नप्रमत्तस्समाहितः ॥
वर्णाश्रमेषु निष्ठानां अन्येषां च विशेषतः ।
दाहयेत्सर्ववर्णानां हरिसालोक्य सिद्धये ॥
ब्राह्मणस्य विशेषेन वैष्णवस्य विशेषतः ।
उपवीतादिवद्धार्याः शङ्खचक्रादयस्तथा ॥

'ब्राह्मणस्य विशेषेण' इत्यादिभिः ब्राह्मणादि सर्ववर्णाधिकार प्रतीतेः । इयांस्तुविशेषः—होमपूर्वकतप्तमुद्राधरणं त्रैवर्णिकानामेव । अन्येषां तु तान्त्रिकमेव । ब्राह्मणस्य होममन्तरातप्तमुद्राधारणे प्रत्यवायः स्मर्यते ॥

सर्ववेदविनीतश्च सर्वशास्त्रविशारदः ।
अधृत्वा विधिना चक्रं ब्राह्मणः पतितो भवेत् ॥

इत्यनेन । नन्वधृत्वा विधिना चक्रमित्यनेन विधिपूर्वकधारणाभावस्य प्रत्यवाय प्रयोजकत्वं प्रतीयते । होमादिरूपविधानमन्तरातप्तमुद्राधारणस्य प्रत्यवाय संपादकत्वं न वचनतः प्रतीयत इति कथं प्रकृतोपयोगीदं वचनमितिचेत् सत्यम् । होमादिविधानंविना तप्तमुद्राधारणस्य विधिविहितमन्त्रसंस्कारादिसंस्कृततप्तमुद्राधारणाभावव्याप्यतया प्रत्यवायजनकतथाविधविधिपूर्वकधारणाभावप्रयोजकतया केवलतप्तमुद्राधारणस्यापि प्रत्यवायसंपादकत्वमस्त्येवेति तस्यापि प्रत्यवायसम्पादकत्वस्याक्षुण्णत्वात् ॥

न च विधिविहिततप्तमुद्राधारणाभावस्य प्रत्यवायसंपादकत्वमसिद्धम् । विधीविहितकर्मपरित्यागस्य प्रत्यवायसंपादकत्वस्य वचनसिद्धत्वात् । तथाहि व्यासः—

नास्तिक्यादथवाऽऽलस्यात् शास्त्रोक्तं न करोति यः ।
स यातिनरकान् घोरांस्तिर्यग्योनिषु जायते ॥

यो यस्य विहितो धर्मः स जातिरिति कीर्त्यते ।
निजधर्मपरिभ्रष्टः सद्यः पतति जातितः ॥

भगवद्गीतायाम्–

यश्शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं नपरांगतिम् ॥
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्मकर्तुमिहार्हसि ॥ इति ।

याज्ञवल्क्यः—

विहितस्याननुष्ठानान्निन्दितस्य निषेवणात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ इति ॥

तथा च ब्राह्मणस्य केवलतप्तशङ्खचक्रादिधारणं प्रत्यवायापादकमेव । अन्यथा 'तप्तांगा लिखितांगाश्च, इत्यादिवचनानामत्यन्ताप्रामाणतापत्तेः । एतानि वचनानि स्मृतिरत्नाकरे उदाहृतानि ॥

रागसन्दग्धगात्राणां न स्यात् पारत्रिकं शुभम् ।
अङ्कये न्न दहेद्देहं दहेच्चेत्कामकारतः ॥
नाधिकुर्वंति दग्धांगाः श्रौतस्मार्तेषु कर्मसु । इति ।

मोक्षप्रयोजनातिरिक्तप्रयोजनोद्देशेन तप्तमुद्राधारणेऽपि प्रत्यवाय एव । पूर्वोदाहृत सुवर्णरौप्यताम्राद्यैरिति वचनोपात्तसौवर्णादि भगवच्चिह्नव्यतिरिक्तायसादिचिह्नेन धारणेऽपि प्रत्यवायः ।

शङ्खं चक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा ।
स शूद्रवद्बहिष्कार्यस्सर्वस्मात् द्विजकर्मणः ॥ इति वचनात् ।

अत्र मृदेत्येनेन 'पर्वताग्रे नदीतीरे ममक्षेत्रे विशेषतः । सिन्धुतीरे च वल्मीके तुलसीमूलमाश्रिते ॥' इत्येतादृशवचनोपात्तमृत्तिकाद्यतिरिक्तमृद एव ग्रहणम् । तथाचानेकश्रुतिस्मृतीतिहासपुराणादिवचनैः होमपूर्वकतप्तमुद्राधारणस्य विशेषतो विहितत्वेन 'शङ्खचक्राद्यङ्कनं च' इत्यादितप्तमुद्राधारणनिन्दावचनानां 'न हिंस्यात् सर्वा भूतानि, 'अग्नीषोमीयं पशुमालभेत, इत्यत्र च वेदविहितपश्वालम्भनादिव्यतिरिक्त रागप्राप्तहिंसाऽऽदिपरतया 'नहिंस्यात्, इति वाक्यव्यवस्थितिवत् विधिविहितचक्रमुद्राधारणव्यतिरिक्तामन्त्रकरागप्रा-

प्तमुद्राधारणनिन्दाऽभिप्रायकतया अन्यथासिद्धत्वम्। 'न हिंस्यात्सर्वाभूतानि, 'अग्नीषोमीयम्' इत्यनयोरुत्सर्गापवादरूपतायाः 'अशुद्धमितिचेत् न शब्दात्' इति सूत्रे शङ्करभाष्य एव स्फुटतरमुपपादितत्वात् ॥ विशेषतोऽपि निन्दावचनानामन्यथासिद्धिर्वर्ण्यते ॥

यत्तु 'शङ्खचक्राद्यङ्कनं च, इति वचनं तत्र च 'नृत्तगीतादिकम्, इत्यत्र च गीतिसामान्यस्य शूद्रधर्मत्वं न सम्भवति। श्रुतिस्मृत्यादिषु ब्राह्मणानधिकृत्य गानस्य प्रवृत्तेः। तथा च छान्दोग्ये -

तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयोऽथ य एवं विद्वान् साम गायत्युभौ स गायति ॥ इति

यजुषि च–

ब्राह्मणौ वीणगाथिनौ गायतः। श्रिया वा एतद्रूपम् यद्वीणा। श्रियमेवान्तर्धत्त इति ॥

याज्ञवल्क्यः--

यथा विधानेन पठन् सामगेयमविच्युतम्।
सावधानस्तथाऽभ्यासात्परं ब्रह्माधिगच्छति ॥ इति।

एतद्वचनव्याख्यानान्तरं विज्ञानयोगिना– 'सामगानाद्यशक्तस्य भगवद्विषय लौकिकगानादिकं कर्तव्यम्, इति। 'अपदां (रां) तकमुल्ल (ल्लो) प्य मद्रकं प्रकरीं तथा, इति श्लोकमुदाहृत्य विस्तरेण तत्प्रकारमभिधाय 'वीणावादनतत्वज्ञः श्रुतिजातिविशारदः। ताळज्ञश्चाप्रयासेन मोक्षमार्गं तु गच्छति' इति वचनमुदाहृत्य भरतादिमुनिप्रणीतवीणावादनतत्ववेदीत्यादिना एतद्वचनस्यार्थमभिधाय एतदन्ते आत्मैकाग्रतायास्सुकरत्वात् अप्रयासेनैव मुक्तिपदं गच्छति प्राप्नोतीति व्याख्याय अन्ते 'गीतितो यदि योगेन न प्राप्नोति परं पदम्। रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥, इत्यभिहितम्। अतएतद्वचनघटकगीतशब्दस्य भगवद्गानव्यतिरिक्तवन्दिवैताळिकादिगानवत् उपजीवनहेतुभूतराजादिगानपरत्वम्, नृत्तशब्दस्यापि राजादिप्रीतिहेतुभूतस्वजीविकाहेतुनृत्तपरत्वमकामेनापि स्वीकार्यम्। अन्यथोदाहृतश्रुतिस्मृतिविरोधापत्तेः। तत्सहपठित 'शङ्खचक्राद्यङ्कनम्, इत्यंकनशब्दस्यापि पूर्वोदाहृतश्रुतिस्मृत्यादिप्रतिपन्नसंस्कारादिरहितकेवलांकनपरतयाऽन्यथासिद्धत्वेन श्रुतिविहित तप्तमुद्रादि-

धारण बाधकं नेदं वचनम् । 'एकजातेः, इत्युत्तरवाक्येन अवैदिकांकनस्य तद्धर्मत्वेन सर्वसम्प्रतिपत्तेः ॥

यत्तु 'यस्तु सन्तप्तशङ्खादि, इत्यादिवचनद्वयं लिङ्गचक्रोभयसमुच्चयपरम्, तत्तु 'अन्यै र्न दाहयेद्गात्रं ब्राह्मणो हरिलांछनात्, इति पूर्वोदाहृतहारीतवचनेन भगवद्भक्तस्य भगवल्लांछनव्यतिरिक्तलिङ्गादिचिह्नधारणस्य निषिद्धतया प्रत्यवायज्ञापकतया अविधिपूर्वकचक्रादिधारणे च प्रत्यवायज्ञापकतयाचान्यथासिद्धम् । अनेनैव न्यायेन 'न चक्रांकिततनुर्वाऽपि, इति वचनमप्यविधिपूर्वकचक्रांकनज्ञापकतयाऽन्यथासिद्धम् । 'श्रौतस्मार्तक्रिय, इति वचनमपि 'विष्णवादिसम्बन्धैः, इत्यत्र तप्तशब्देन 'शङ्खचक्रगदाखड्गशार्ङ्गाद्न्यैर्हरेरपि, इति वचनात् पञ्चायुधव्यतिरिक्त भगवदायुधतप्तमुद्राधारणस्यनिषिद्धतया प्रतिपदोक्तपञ्चायुधव्यतिरिक्त भगवदायुधतप्तमुद्राधारणे प्रत्यवायज्ञापकतया चरितार्थम् । 'अज्ञानादथवा लोभात्, इति वचनं अज्ञानादित्यनेन तन्माहात्म्यज्ञानाभावं लोभादित्यनेन मोक्षव्यतिरिक्तार्थित्वं द्रव्यलोभं वा रागत इत्यनेन मात्सर्यादिकं वा प्रतिपादयत्सदन्यथासिद्धम् ॥

पूर्वोदाहृतवचनेषु आचार्योपसदनतन्माहात्म्यज्ञानादिपूर्वकतया विधि पूर्वकचक्रांकनधारणस्य विहितत्वात् । अनेनैव न्यायेन 'भुजाग्रे सलिलेन, इति वचनं हेळनादिपुरस्कारेण चक्राङ्कनधारणं प्रतिपादयत्सदन्यथासिद्धम् । अन्यथा 'लीलयाऽपि लिखेद्यस्तु बाहुमूले सुदर्शनम् । कुलकोटिं समुद्धृत्य स गच्छेद्वैष्णवं पदम् ॥, इति तन्माहात्म्यज्ञानपूर्वक रेखादिधारणानिमित्तवपुण्यलोकप्राप्तिप्रतिपादकवचनविरोधापत्तेः ॥

'शङ्खं चक्रं च पद्मं च' 'अंगेषु नाङ्कयेद्विप्रः, 'नांकयेन्न दहेद्गात्रम्' एतद्वचनत्रयं होमादिसंस्कारसंस्कृतचक्रांकनादिव्यतिरिक्तलौकिकाङ्कनादिनिमित्तप्रत्यवायपरतया चरितार्थम् । 'नांकयेन्न दहेत्, इति यद्बोधायनवचनं तत् बहुषु पुस्तकेषु अङ्कयेन्न दहेदेहम् इत्येव दृष्टम् । अंकयेदिति पाठे तु अंकयेदित्यनेन मन्त्रसंस्कारपूर्वकांकनं विधीयते । न दहेदित्यनेन अमन्त्रकांकनं निषिध्यते । 'कामकार, इति तत्रैव श्रुतेः । नांकयेदिति पाठे तु केवलांकनमेव निषिध्यते । 'न दहेत्, इत्यनेन भगवल्लांछनव्यतिरिक्तायुधदाहादिकं निषिध्यते ॥

यत्तु चक्रोपनिषद्वाक्यम् 'तस्माच्छूद्राणामेव शङ्खं चक्रं भुजे धार्यम्,

इति तत्तु पूर्वोदाहृत ' दाहयेत् सर्ववर्णानां हरिसालोक्यसिद्धये ' इति वचनबलात् एवकारस्याप्यर्थकतया अन्यथासिद्धम् ॥

' भूदेव , इति वचनं पूर्वोक्तन्यायेनैवान्यथासिद्धम् । ' यानि शास्त्राणि दृश्यन्ते , इति वचनं प्रकृततप्तमुद्रा-दिधारणविरोधि न भवति । तद्धारणस्य पूर्वोदाहृतश्रुतिस्मृतिपुराणवचनसिद्धत्वात् । ' यथा श्मशानगं काष्ठम् , इति वचनं पूर्वोदाहृतन्यायेनैवान्यथासिद्धम् । यत्तु ' तप्तमुद्रा तु , इति वचनं तत् काशिखण्डे मित्रजिदुपाख्याने—

तस्मिन् प्रशासति भुवं संप्राप्ते हरिवासरे ।
स एव दण्ड्योऽभूत्तस्य राष्ट्रे मित्रजितः क्षितौ ॥
यो विष्णुभक्तिरहितः प्राणैरपि धनैरपि ।
अन्त्यजा अपि तद्राष्ट्रे शङ्खचक्रांकधारिणः ॥
संप्राप्य वैष्णवीं दीक्षां दीक्षिता इव शांभवाः ।

इत्येतद्वचनसमानार्थकतया अन्त्यजाय इत्यस्याप्यर्थगर्भतया अन्यथासिद्धम् ॥

' गोपीचन्दनलिप्ताङ्गः, इत्येतदपि ॥ स्कान्दे काशीखण्डे—

शङ्खचक्रांकिततनुस्तुलस्या मञ्जरीधरः ।
गोपीचन्दनलिप्तांगो दृष्टश्चेत्तदघं कुतः ॥

इति वचनेन गोपीचन्दनधारणस्य पापनिवर्तकतया प्रसक्तिस्तद्धारणस्यान्त्यजानामप्युचिततया प्रकृतानुकूलमेव । ' गोपीचन्दनसंलिप्तफालका येऽन्त्यजातयः , इत्यर्थकरणे अनेकश्रुतिस्मृतीतिहासपुराणवचन विरोधापत्तेः । परंतु गोपीचन्दनधारणं ब्राह्मणानां तत्तन्मन्त्रादिपूर्वकम् , शूद्रादीनां तु केवलचन्दनधारणमेवेति प्रतीयते । एतच्च विस्तरतः ऊर्ध्वपुण्ड्रधारणप्रकरणे वक्ष्यते ॥

' आयुधैः शङ्खचक्राद्यैः , ' दग्धांगाश्चायुधैर्दिव्यैः , ' दग्धांगा लिखिताङ्गाश्च , इत्येतद्वचनत्रयं पूर्वोक्तश्रुतिस्मृतिसंप्रतिपन्नवैदिकांकनव्यतिरिक्तांकनधारिनिन्दापरतया अन्यथासिद्धम् ॥

यत्तु ' स्वकर्मत्यागिनो राजन् , इति तत् वेदविहिताचारपरित्यागपूर्वकभगवत्पाञ्चरात्रव्यतिरिक्त नारदपाञ्चरात्रोक्तकतिपयाचारपरपुरुषनिन्दापरतया अन्यथासिद्धम् ॥ वेदमार्गानुसारिभगवत्पाञ्चरात्रोक्तकर्मानुष्ठातृब्राह्मणनिन्दापरं नंभवति । एतच्च पांचरात्रप्रभेदादिकं पांचरात्रप्रामाण्यविचारप्रकरणे उपपादयि-

ध्यते ॥ 'अनिमित्तं दहेत्, इति यद्वचनं तदपि बाधकं न भवति। समस्तपापनिवृत्तिहेतुतया पूर्वोदाहृतवचनप्राप्तविधिपूर्वकतप्तमुद्राधारणादिरूपनिमित्तं विना दाहे प्रत्यवायप्रतीतेः ॥

यत्तु 'अतीव पतितानाम्' इति वचनं तत्तु कृतापराधनिवृत्त्यर्थं तत्तच्छिक्षाऽनुरोधेन राज्ञा कारयितव्यमिति तत्र तत्र व्यवहारशास्त्रेषु प्रायश्चित्तेषु च विहितत्वेन तथाविधांकनपरतयाऽन्यथासिद्धं न प्रकृतविरोधि ॥

अत एव हेमाद्रौ—

गुरुतल्पे भगः कार्यस्सुरापाने सुराध्वजः।
स्तेये तु श्वपदं कार्यं ब्रह्महत्यां शिरः पुमान् ॥
एवं कृत्वा तु शास्त्रेण निर्वास्यो विषयाद्बहिः।
अन्यथा दोषमाप्नोति राज्ञोऽयं धर्म उच्यते ॥ इति

'अतीव पतितानाम्, इति वचनसजातीयानामन्येषामपीदमेवोत्तरम्। अत्रैव 'ततश्शुद्धं न चांकयेत्, इति पूर्वोक्ताभिप्रायस्मारकम्। 'अध्यापने च इत्यपिवचनं केवलं लांछितम् इति लांछनमात्रज्ञापकं सत् पूर्वोदाहृतन्यायैरेव अन्यथासिद्धम् ॥

यत्तु 'शिवकेशवयोः, इति वचनं तत्तु शिवकेशवायुधलांछनसमुच्चयाभिप्रायकत्वे 'चक्रलिङ्गतनुर्द्विजः, इत्यत्र प्रतिपादितन्यायैरेवान्यथासिद्धम्। प्रत्येकाभिप्रायकत्वे तु विधिविहितमन्त्रसंस्काराद्यसंस्कृतचक्रांकननिन्दापरतया अन्यथासिद्धम् ॥

यत्तु 'स्वदेहे परदेहे वा, इति वचनं तदपि पूर्वोक्तन्यायेनैवान्यथासिद्धम्। 'केनचिल्लांछित, इति वचनं विधिविहितचक्रादिधारणनिन्दापरमेव न। किं तु पूर्वोदाहृतहेमाद्रिवचनप्राप्तराजादिलांछितपुरुषसाक्षित्वाभावप्रतिपादकतया अन्यथासिद्धम्। 'श्रौतस्मार्तसमाचार, इति तत्रैव श्रुतेः। भ्रष्टस्य तथाविधाचारसाक्षित्वानुपपत्तेः ॥ 'लांछिताश्च न संभाष्याः, इति वचनं 'अतीव पतितानाम्, इत्यत्रोक्तान्यथासिद्धिन्यायेनैव चरितार्थम्। एवं विधिविहिततप्तमुद्रानिन्दावचनानां उत्सर्गापवादन्यायेन सामान्यतो विशेषतश्चान्यथासिद्धिरेवांगीकर्तव्या। अन्यथा निन्दावचनसद्भावात्रेण तप्तमुद्राधारणस्याननुष्ठेयत्वे भस्मात्रिपुण्ड्रादिधारणनिन्दावचनसद्भावात्तस्यापि वैदिकैरननुष्ठेयत्वप्रसक्तेर्दुर्वारत्वात्। तत्रोत्सर्गापवादन्यायेन नहि निन्दान्यायेन वा

अधिकारिभेदेन निन्दावचनानामन्यथासिद्धिश्चेत् इहापि उत्सर्गापवादन्यायस्य दर्शितत्वेन विधिविहिततप्तमुद्राधारणप्रशंसापरतया शैववैष्णवादिरूपाधिकारि-भेदेन च विष्णुभक्तैर्धार्यतया तदन्यैः न धार्यमित्यर्थकतया वा नेतुं शक्यत्वेन विधिविहिततप्तमुद्राधारणस्य न कदाऽप्यवैदिकत्वमिति तुल्यमेव ॥

तथा हि भस्मत्रिपुण्ड्रादिधारणनिन्दावचनान्युदाह्रियन्ते ।

पाद्मे—

कपालकेश भस्मास्थिशक्तिपाषाणधारिणम् ।
त्रिपुण्ड्रधारिणं विप्रं चण्डालमिव संत्यजेत् ॥
कुलीनो ब्राह्मणो विद्वान् भस्मग्राही भवेद्यदि ।
वर्जयेत्तादृशं देवि मद्योच्छिष्टघटं यथा ॥
त्रिपुण्ड्रधारणं विद्वान् लीलयाऽपि न कारयेत् ।
त्रिपुण्ड्रधारणाद्विप्रः पतत्येव न संशयः ॥
बालेन्दुवत् क्षत्रियाणां वैश्यानां वर्तुलाकृतिः ।
त्रिपुण्ड्रं शूद्रकल्पानां विधिरेष सनातनः ॥
तामसेषु पुराणेषु मोहनार्थं सुरद्विषाम् ।
त्रिपुण्ड्रधारणं प्रोक्तं तामसैर्मुनिसत्तमैः ॥
तामसानि पुराणानि दृष्ट्वा मोहाच्च यो द्विजः ।
त्रिपुण्ड्रधारणं कृत्वा तमस्यन्धे निमज्जति ॥
तिर्यक्पुण्ड्रं न कुर्वीत संप्राप्ते मरणेऽपि च ।
तिर्यक्पुण्ड्राद्गतिस्तिर्यक् ऊर्ध्वपुण्ड्रात्तथोर्ध्वगा ॥
शस्त्रधार्यस्त्रधारी च धनुर्धारी धनापहः ।
तिर्यक्पुण्ड्रधरो विप्रः स चण्डालसमो भवेत् ॥
ब्राह्मणः कुलजो विद्वान् तिर्यक्पुण्ड्रधरो यदि ।
तं गर्दभे समारोप्य राजा राष्ट्रात्प्रवासयेत् ॥

ब्रह्मरात्रे—

ब्राह्मणस्योर्ध्वपुण्ड्रं स्यात् क्षत्रियस्यार्धचन्द्रकम् ।
वैश्यस्य वर्तुलाकारं शूद्रस्यैव त्रिपुण्ड्रकम् ॥

वासिष्ठसंहितायाम्—

यत्तु रुद्रार्चनं प्रोक्तं त्रिपुण्ड्रं वाऽपि सत्तमाः ।

तदब्रह्मण्यविषयं नतु विप्रस्य कस्यचित् ॥
न त्रिपुण्ड्रं द्विजैर्धार्यं पट्टिकाकारमेव च ।
नचान्यदेवताभक्तैरापद्यपि कदाचन ॥

ब्रह्माण्डे—

त्रिपुण्ड्रं शूद्रकल्पानां शूद्राणां च विधीयते ।

वाराहे गौतमः—

शशाप तान् जटाभस्मदीक्षाव्रतधरांस्तथा ।
त्रिपुण्ड्रधारिणो नित्यं भस्मोद्धूलनतत्पराः ॥
भविष्यथ त्रयीबाह्या मिथ्याज्ञानप्रलापिनः ॥
बौद्धे चाप्यार्हते चैव तथा पाशुपतेऽपि च ।
शाम्भवे दीक्षिता यूयं भवथ ब्राह्मणाधमाः ॥

हारीते—

रुद्राक्षं त्रिपुण्ड्रस्य धारणं यत्र दृश्यते ।
तच्छूद्राणां विधिः प्रोक्तो न द्विजानां कदा च न ॥
न भस्म धारयेद्विप्रः परमापद्गतोऽपि वा ।
मोहाद्वै धारयेद्यस्तु स सुरापो भवेत् ध्रुवम् ॥
तिर्यक्पुण्ड्रधरं विप्रं पट्टाकारधरं तथा ।
श्वपाकमिव नेक्षेत न संभाषेत कुत्रचित् ॥
तिर्यक्पुण्ड्रधरं विप्रं यश्श्राद्धे भोजयिष्यति ।
पितरस्तस्य यान्त्येव कालसूत्रं सुदारुणम् ॥

इत्यादीनि बहूनि निन्दावचनानि सन्ति । अत्र हारीतवचनव्यतिरिक्तानि सर्वाण्यपि वैद्यनाथीये उदाहृतानि । भस्मत्रिपुण्ड्रधारण विधायकानि वचनानि ॥ अथर्वशिरसि—

व्रतमेतत्पाशुपतं पाशविमोक्षायाग्निरिति, भस्म अग्निः अस्मिन् जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् । अर्कस्त्रिधारू रजसो विमानः अग्निरिति, भस्म वायुरिति भस्मजलमिति भस्मस्थलमिति भस्मव्योमेति भस्मसर्वं हवा इदं भस्म मन एतानि चक्षूंषि करणानि भस्मानि तस्मादग्निरित्यादिना भस्म गृहीत्वा विमृज्यांगानि संस्पृशेत् तस्माद्व्रतमेतत्पाशुपतं पशुपाशविमोक्षायेति ॥

कालाग्निरुद्रोपनिषदि–

‘तगूँहोवाच भगवान् कालाग्निरुद्रो यद्द्रव्यं तदाग्नेयं भस्मसद्योजातादि’ पञ्चब्रह्ममन्त्रैः परिगृह्याग्निरिति भस्मेत्यनेन चाभिमन्त्र्य मानस्तोक इति समुद्धृत्य जलेन संमृज्य त्र्यायुषमिति शिरो ललाटवक्षस्स्कन्धेषु त्र्यायषैः त्र्यंबकैस्तिर्यक् तिस्रोरेखाः प्रकुर्वीत व्रतमेतच्छांभवमिति बोधायनेनोक्तम्। ‘अथातो द्विजातीनां त्रिपुण्ड्रधारणविधिं व्याख्यास्यामो भूत्यै न प्रमदितव्यम्, इति विज्ञायते ॥ तथापि उदाहरन्ति—

मध्यमाऽनामिकाऽङ्गुष्ठैः त्रिपुण्ड्रं भस्मनाकृतम्।
तत् त्रिपुण्ड्रं भवेच्छस्तं महापातकनाशनम् ॥ इति

अथ त्र्यम्बकमिति सर्वांगं संस्पृशेत्पूतो भवति। दश पूर्वान् दशापरान् आत्मानमेकविगूँशतिं पङ्क्तिं च पुनाति ब्राह्मणः सायुज्यं सलोकतामाप्नोति इत्याह—भगवान् बोधायन इति ॥

क्रियासरे–

मध्याङ्गुलित्रयेणैव स्वदाक्षिणकरस्य तु।
षडङ्गुलायतं मानमथवाऽधिकमानकम् ॥
नेत्रयुग्मप्रमाणं वा फाले दीप्तं त्रिपुण्ड्रकम्।
कदाचिद्भस्मना कुर्यात् सरुद्रो नात्र संशयः ॥
अकारोऽनामिका प्रोक्ता उकारो मध्यमाङ्गुलिः।
मकारस्तर्जनी तस्मात् त्रिभिः कुर्यात् त्रिपुण्ड्रकम् ॥ इति ॥

स्कान्दे—

भस्मना वै त्रिसन्ध्यञ्च तांत्रिकाणां जलैर्युतम्।
धार्यं त्रिपुण्ड्रं स्त्रीणां च यतीनां जलवर्जितम् ॥
वनस्थव्रतिकान्यानां दीक्षाहीननृणां तथा।
मध्याह्नात्प्राग्जलैर्युक्तं परतो जलवर्जितम् ॥ इति

वासिष्ठलैंगे—

औपासनसमुत्पन्नं गृहस्थानां विशेषतः।
समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणाम् ॥

ब्रह्मचारिणां धारणप्रकारमाह बोधायनः—यस्मिन्नग्नौ कर्म कृत्वोपति-

च्छते तस्मात्तूष्णीं भस्मादायतूष्णीमभिमन्त्र्याभिमृश्य मानस्तोकेति मन्त्रेणा दाय धारयेत् । मेधावीति ललाटे तेजस्वीति दक्षिणे बाहौ वर्चस्वीति सव्ये ब्रह्मवर्चसीति हृदये आयुष्मानिति कण्ठे भूयासं स्वस्तीति सर्वत्रानुषज्येत ॥ क्रियासरे—

शूद्रहस्तस्थितं भस्म द्विजातिर्नैव धारयेत् ।
तथैवान्त्यजहस्तस्थं शूद्रैः धार्यं न जातुचित् ॥
यावन्तः पतिता भूमौ भस्मनः परमाणवः ।
तावद्वर्षसहस्राणि रौरवं नरकं व्रजेत् ॥

इत्यादीनि सन्ति । अत्र त्रिपुण्ड्रधारणनिषेधवचनानां तद्विधायकवचनानाञ्चोत्सर्गापवादन्यायेन विधिविहितमन्त्रपूतभस्मात्रिपुण्ड्रधारणव्यातिरिक्तायोग्यभस्मधारणपुण्ड्रनिन्दाभिप्रायकतया बिधिविहितमन्त्रपूतभस्मधारणविधायकतया यथा न विरोधः तथाऽनेकश्रुतिस्मृतीतिहासपुराणवचननिचयविहिततप्तचक्राङ्कनतदतिरिक्तावैदिकायसचक्राद्यङ्कनपरतया विधायकनिषेधकवचनानां चाविरोधनयनं युज्यते । अन्यथा निन्दावचनसद्भावमात्रेण तप्तचक्राङ्कनस्य तांत्रिकत्वमवैदिकत्वं वा आपद्येत । भस्मत्रिपुण्ड्रधारणस्य तथात्वमनिवार्यम् । निन्दावचनेषु ‘ चण्डालः कोटिजन्मसु , ‘ प्रेत्यचश्वा भविष्यति, ‘ पाषण्ड , इत्यादिशब्दः चण्डालत्व , श्वत्व , पाषण्डत्वजात्याक्रान्तता नैव प्रतीयते ॥ किंतु

औपासनपरित्यागी सुरापीत्युच्यते बुधैः ।
नकर्माहों भवेदत्र शूद्र एव न संशयः ॥

इत्यादिवचनेषु औपासनत्यागिनो ब्राह्मणस्य न शूद्रजात्याक्रान्तता नवा सुरापातृता परन्तु प्रत्यवाय एव यथा , तथा पूर्वोक्तताद्दशवचनेष्वपि प्रत्यवायः प्रतीयत इति वक्तव्यम् । तत्तु द्विजस्यावैदिकांकनधारणे तथा भवत्येवेति सर्वमनवद्यम् ॥

इति श्रीमच्छ्रीनिवासब्रह्मतन्त्रपरकालगुरुवरविरचित
सुदर्शनपाञ्चजन्यादिधारणनिर्णयःसमाप्तः ॥



|| श्रीमते लक्ष्मीहयवदनपरब्रह्मणे नमः ||

श्रीमते रामानुजाय नमः

|| श्रीमते निगमान्तमहादेशिकाय नमः ||

श्री रङ्गाचार्यविद्वदनुगृहीतः

# || सुदर्शनवादः ||

करोतु स्वस्ति नश्चक्रं हरेः करविभूषणम् ।
यदङ्केन जनास्सर्वे मुच्यन्ते सर्वपातकैः ||
पायादपायादनिशं प्रपन्नान्नस्सुदर्शनम् ।
यत्प्रभावात्पलायन्ते पाषण्डमतमाश्रिताः ||

अथ तप्तचक्रादिधारणं सर्वाधिकारिकत्वेन सर्वैः कर्तव्यमिति यद्यपि स्मृतिकौस्तुभ सुदर्शनमीमांसाऽऽदिषु महता प्रबन्धेन परमतनिराकरणपूर्वकं व्यवस्थापितमेव पूर्वाचार्यैः ; तथाऽपि तदनभिज्ञाः केवलरूढिद्विवेदिनामानः पण्डितंमन्या ये केचिदाधुनिकाः वादासमर्थतया भग्नाः दातृपुरनिवासिप्रभृतयः स्ववेश्मसु प्रलपन्ति तप्तचक्रादिधारणं न सर्वाधिकारिकमिति– तन्मुखबिलाच्छादनाय तप्तचक्रादिधारणं सर्वैरपि कर्तव्यमिति अनन्यपरप्रमाणैः सङ्क्षेपतो व्यवस्थाप्यते श्रीमद्रामानुजसिद्धान्तनिर्धारणसार्वभौमेन श्रीरङ्गाचार्येण विदुषा ||

तत्र संशयः– तप्तचक्रादिधारणं सर्वैः कर्तव्यं नवेति । किं युक्तम् ? न कर्तव्यमिति । कुतः ?

यस्तु संतप्तचक्रादिलिङ्गांकिततनुर्नरः ।
स सर्वयातनाभोगी चण्डालः कोटिजन्मभिः ||
तं द्विजं तप्तशङ्खादिलिङ्गांकिततनुं नरः ।
संप्राप्य रौरवं याति यावदिन्द्राश्चतुर्दश ||
चक्रांकिततनुर्यत्र तत्र कोऽपि न संवसेत् ।
यदि तिष्ठेन्महापापी सहस्रब्रह्महा भवेत् ||
गङ्गास्नानरतो वाऽपि अश्वमेधरतोऽपि वा ।

शङ्खचक्रांकिततनुं स्पृष्ट्वा रौरवमश्नुते ॥
चक्रांकिततनुं दृष्ट्वा पश्येत्सूर्यं जपन्नरः ।
प्रजपेत्पौरुषं सूक्तमन्यथा नरकं व्रजेत् ॥
ब्राह्मणस्य तनुर्ज्ञेया सर्ववेदसमन्विता ।
सा चेत्प्रतापिता राजन्निमं वक्ष्यामहे वयम् ॥
शङ्खचक्राद्यङ्कनञ्च गीतनृत्तादिकं च यत् ।
एकजातेरयं धर्मो नचायं स्यात् द्विजन्मनः ॥
शङ्खचक्रे मृदा यस्तु कुर्यात्तप्तायसेन वा ।
स शूद्रवद्बहिष्कार्यः सर्वस्मात् द्विजकर्मणः ॥
यथा श्मशानगं काष्टमनर्हं सर्वकर्मसु ।
तथा चक्रांकितो विप्रः सर्वकर्मसु गर्हितः ॥
शिवकेशवयोरङ्कान् शूलचक्रादिकान् द्विजः ।
न धारयेत्तु मतिमान् वैदिके वर्त्मनि स्थितः ॥
ब्राह्मणो यदि मोहेन धारयेद्वह्निमुद्रिकाम् ।
न कर्मार्हो भवेदत्र स वै पाषण्डसंज्ञितः ॥
प्रतप्तमुद्राऽन्त्यजाय हरिणा निर्मिता पुरा ।
भूदेवस्तप्तमुद्रां तु चिह्नं कृत्वा विमूढधीः ॥
इह जन्मनि शूद्रस्स्यात् प्रेत्य च श्वा भविष्यति ।

इति विष्ण्वाश्वलायनवायुपुराणादिवचनैः द्विजातीनां तप्तचक्रादिधारणनिषेधात् ॥ न च ‘अनप्ततनूः, इत्यादिश्रुत्या मुमुक्षूणां तप्तचक्रादिधारणं प्रतीयत इति वाच्यम् । ‘अतप्ततनूः, इत्यस्य तप्तं तपः भावे निष्ठा तद्रहिता तनुर्यस्य स तथोक्त इत्यर्थकत्वेन तस्याश्श्रुतेस्तप्तचक्रादिधारणाप्रतिपदकत्वात् । नच तथाऽपि

अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं तथा ।
ब्राह्मणस्य तथैवेदं तप्तचक्रादिधारणम् ॥
धृत्वैव विधिवच्चक्रं हरेस्तप्तं द्विजोत्तमः
कर्म कुर्याद्भगवतः तस्यैवाज्ञामनुस्मरन् ॥
नान्यं देवं नमस्कुर्यात् नान्यं दैवं निरीक्षयेत् ।
चक्रांकितस्सदा तिष्ठेत्स भक्तः पाण्डुनन्दन ॥

इत्यादिपाद्म हारीत भारतादिवचनैः द्विजातीनामपि तप्तचक्रादिधारणं प्रतीयत इति वाच्यम्। एषां वचनानां पूर्वोक्तवचनविरोधेन द्विजोत्तमपदे द्विज उत्तम इव द्विजोत्तम इति समासाश्रयणेन भाक्तद्विजाधिकारप्रतिपादनपरत्वेन द्विजातिपदाघटितवचनानां एकजातिसङ्करजातिपरतया निर्वाहेण च द्विजत्वावच्छेदेन तप्तचक्रादिधारणप्रतिपादकत्वाभावात्। तस्मात् तप्तचक्रादिधारणं न सर्वैः कार्यमिति प्राप्तेऽभिधीयते–

सर्वैरेव तप्तचक्रादिधारणं कर्तव्यम्। कुतः ? श्रुतिभ्यः। तथाहि ऋचि तैत्तरीयके च पठ्यमानया

पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः। अतप्ततनूर्न तदामोऽश्नुते श्रितास इद्वहन्तस्तत्समासत, इति श्रुत्या

चक्रं बिभर्ति वपुषाऽभितप्तं बलं देवानाममृतस्य विष्णोः। स एति नाकं दुरिता विधूय प्रयान्ति यद्यतयो वीतरागाः, इत्याथर्वणश्रुत्या

चरणं पवित्रं विततं पुराणम्, इत्यादिकया चरणं नो लोके सुधितां दधातु, इत्यन्तया काठकश्रुत्या

'धृतोर्ध्वपुण्ड्रः कृतचक्रधारी, इत्यादिकया 'परात्परं यन्महतो महान्तम्, इत्यन्तया ठकवल्लीश्रुत्या, 'चमूषच्छ्येनश्शकुन, इत्यारभ्य 'तुरीयं धाम महिषो विवक्ति, इत्यन्तया ऋक्सामयोः पठ्यमानया श्रुत्या 'निचिक्षेप सुषेणं भिद्यमानम्, इत्यादिकया 'बिभृयुस्तज्जनासः, इत्यन्तया बृहदारण्यकश्रुत्या 'प्रते विष्णो अब्जचक्रे पवित्रे, इत्यादिकया 'लिङ्गान्यङ्गे तावकान्यर्पयन्ति, इत्यन्तया बह्वृचबाष्कलसंहिताश्रुत्या 'एभिर्वयमुरुक्रमस्य चिह्नैः, इत्यादिकया 'एभिर्गच्छन्ति लांछिताः, इत्यन्तया आथर्वणश्रुत्या 'दक्षिणे तु भुजे विप्र, इत्यादिकया 'ब्रह्मविदो विदुः, इत्यन्तया महोपनिषदन्तर्गतब्रह्मसूत्राधिकरणकश्रुत्या 'अग्निर्वै सहस्रारः। सहस्रारो नेमिः। नेमिना तप्ततनुः, इत्यादिकया 'सलोकतामाप्नोति, इत्यन्तया मैत्रावरुणशाखाश्रुत्या 'अग्निना वै होत्रा चक्रं पाञ्चजन्यं सुतप्तं द्विभुजे धार्यम्, इत्यादिकया 'इत्युपनिषत्, इत्यन्तया आथर्वणश्रुत्या 'चक्रमादायाग्नौ ताप्य ब्राह्मणस्य दक्षिणे बाहौ धारयेत्, इत्यादिकेन 'ब्राह्मणास्तद्वहन्ति, इत्यन्तेन आथर्वणश्रुत्यन्तरेण शतपथब्राह्मणेषु 'अथ कात्यायनेतिहोवाच, इत्यादिनवखण्डयधिकरणकैः 'तप्तचक्रं द्विभुजे धार्यम्, इत्यादिकैर्वाक्यैश्च

ब्राह्मणमधिकृत्यापि तप्तचक्रादिधारणविधानात् ॥

नच 'अतप्ततनूः, इत्यत्र तप्तपदस्य तपोऽर्थकत्वमेव न दाहार्थकत्वमिति वाच्यम् । वेदस्य

इतिहासपुराणाभ्यां वेदं समुपबृह्मयेत् ।
बिभेत्यल्पश्रुताद्वेदः मामयं प्रतरिष्यति ॥

इति प्रमाणप्रतिपन्नावश्यकर्तव्यताकोपबृंहणत्वेन 'पवित्रं ते, इति श्रुत्युपबृंहणभूते—

पवित्रं ब्रह्मणस्सत्यं जगद्व्याप्तं हरेस्सदा ।
तेन तप्ता तनुर्येषां ते यान्ति परमां गतिम् ॥

इति पाद्मवचनेन योगरूढिभ्यां पवित्रशब्दोपदर्शितसुदर्शनपरामर्शितच्छब्दार्थस्य तप्तपदार्थं प्रति करणत्वप्रतीत्या निर्णीतदाहार्थतप्तादिपदघटित श्रुत्यन्तरैकार्थ्येन च दाहार्थकत्वानिर्णयात् तपोऽर्थकत्वे तनुपदवैयर्थ्याच्च ॥

एवमासु श्रुतिषु कासुचित् शाखान्तराधिकरणन्यायेन वाक्यान्तरस्थतप्तपदाद्युपसंहारसम्भवात् कासुचित् विधिप्रत्ययाश्रवणेऽपि 'उपांशुयाजमन्तरा यजति, इत्यादाविव विधित्वप्रयोज्याया अप्राप्तेस्सत्वेन 'वचनानित्वपूर्वत्वात्' इति न्यायेन विधिप्रत्ययकल्पनया विधायकत्वसम्भवात् । 'विष्णु रुपांशु यष्टव्यः' इत्यादौ विधित्वप्रयोजकाप्राप्त्यभावेन विधिप्रत्ययश्रवणेऽपि विधायकत्वादर्शनात् ॥

कासुचित् अनुवादलिङ्गसत्वेऽपि 'उपरि हि देवेभ्यो धारयति' इत्यत्रेव सर्वानुवादलिङ्गभञ्जकाप्राप्तिसत्वेन 'विधिस्तु धारणेऽपूर्वत्वात्' इति न्यायेन विधायकत्वसम्भवाच्च सर्वासामप्यासां तप्तचक्रादिधारणविधायकत्वमुपपन्नतमं मन्तव्यम् ॥

नच पूर्वोदाहृतविष्णवादिवचनाविरोधेन उक्तश्रुतीनां तप्तचक्राधारणविधायकत्वसम्भव इति वाच्यम् । समबलयाऽपि श्रुत्या बाधितुमशक्यायाः श्रुतेः दुर्बलया स्मृत्या बाधासम्भवात् । अन्यथा 'न हिंस्यात्सर्वा भूतानि' 'अहिंसा परमो धर्मः' इत्यादिना 'वायव्यँ श्वेतमालभेत भूतिकामः' 'चित्रया यजेत पशुकामः' 'अग्नीषोमीयं पशुमालभेत' इत्यादिविधीनामपि बाधापत्तिः । नचैवमिष्यते शास्त्रविद्भिः ॥

ननु तर्ह्यधिकारिभेदेन तप्तचक्रादिधारणतन्निषेधयोः व्यवस्था कल्पनीयेति चेत्- तर्हि उच्यतां कः तप्तचक्रादिधारणाधिकारी ? अत्राह्मण इतिचेत् तर्हि 'दक्षिणे तु भुजे विप्रः, 'चक्रमादायाग्नौ प्रताप्य ब्राह्मणस्य दक्षिणे बाहौ धारयेत्, इत्यादिश्रुत्या ब्राह्मणमधिकृत्यैव तप्तचक्रादिधारणविधायिन्या विरोधापत्तिः । नच भवन्मतेऽपि ब्राह्मणमात्राधिकारपरतया श्रुत्या विरोधः दुष्परिहरः तप्तचक्रादिधारणस्य सर्वाधिकारिकत्वस्य भवन्मतसिद्धत्वादिति वाच्यम् ।

इदं शास्त्रमधीयानो ब्राह्मणो वेदपारगः (संश्रितव्रतः) ।
मनोवाग्देहजैर्नित्यं कर्मदोषैर्नलिप्यते ॥

इति वचनस्थब्राह्मणशब्दस्य 'इदं शास्त्रमधीयानो ब्राह्मणः क्षत्रियो विट्, इति वचनैकवाक्यतया त्रैवर्णिकोपलक्षकत्ववत्

अग्निनैव तु सन्तप्तं चक्रमादाय वैष्णवः ।
दाहयेत्सर्वपापानां हरिसालोक्यसिद्धये ॥

इत्यादिव्यासगारुडवचनैः

एवं तदीया विप्राश्च क्षत्रिया वैश्यजातयः ।
स्त्रियश्शूद्रास्तथैवान्ये न तच्चिह्नविवर्जिताः ॥
भवेयुस्सर्वदा तस्माच्छङ्खचक्रगदांबुजैः ।
लोहैरनलनसन्तप्तैः तत्तन्मन्त्राधिदैवतैः ॥
पूजितैः पुष्पगन्धाद्यैः अंकितव्यास्तु लक्षणैः ॥

इत्यादिपरमेश्वरसंहितावचनेन, तादृशेरेव 'स्त्रियश्शूद्रास्तथा चान्ये, इत्यत्र 'मौद्गल्याद्यास्तथाचान्ये, इति चरणघटितेन पराशरवचनेन

तस्मात्सुदर्शनं चक्रं प्रतप्तं धारयेत् द्विजः ।
कर्मसिद्ध्यै विशेषेण तद्दास्यैककलामयः ॥

इत्यत्रिस्मृतिवचनेन

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो नारी तथेतरः ।

इति भरद्वाजवचनेन,

तस्माच्चक्रं विधानेन प्रतप्तं धारयेत् द्विजः ।
सर्वाश्रमेषु वसतां स्त्रीणांच श्रुतचोदनात् ॥ इति हारीतवचनेन

गरुत्मानुवाच —

चक्रादिधारणं देव घोरसंसारतारणम्।
अत्राधिकारिणं ब्रूहि विधेः के वाऽधिकारिणः ॥

श्रीभगवानुवाच —

गरुत्मन्नविशेषेण सर्ववर्णेष्वयं विधिः ।
वहस्व नित्यमेव त्वं मम प्रीतिकरं शुभम् ॥
विप्रोवा यदिवा क्षत्रः वैश्यश्शूद्रस्तथैव च ।
अन्ये संकरजाताश्च तप्तचक्रादिधारिणः ॥

इति विहगेश्वरसंहितावचनेन, अन्यैश्च —

चतुर्णामपि सामान्यं विष्णोश्चक्रस्यधारणम् ।

इत्यादिवचनैरेकवाक्यतया तप्तचक्रादिधारणपरश्रुतिस्थविप्रादिपदस्य ब्राह्मणादिसकलतदधिकार्युपलक्षकत्वेन विरोधाभावात् ॥

ननु तथाऽपि द्विजोत्तमपदे द्विज उत्तम इव द्विजोत्तम इति समासाश्रयणेन भाक्तद्विजो धारणेऽधिकारी, निषेधे तु मुख्यद्विज इति व्यवस्था इति चेत् — विनिगमकाभावात् विशेषवाचकपदस्य लक्षणादिनाऽन्यपरत्वकल्पनाऽपेक्षया सामान्यवाचकपदस्य विशेषे पर्यवसानस्यैव न्यायसिद्धत्वेनोचितत्वाच्च तप्तचक्रादिधारणनिषेधकवचनस्थ द्विजातिपदस्यैव भाक्तद्विजातिपरत्वं कुतो नानुमन्यसे ? किंच उपमानत्वावच्छेदकावच्छिन्नप्रतियोगिताकभेदमात्रतात्पर्यकोपमानदृष्टचरी सामान्यधर्मबोधनद्वारा सहृदयहृदयाह्लादस्यैव तत्फलत्वादित्यादिदोषापत्तिः ॥

अस्तु वा यथाकथञ्चित् । तथाऽपि निरुच्यतां किं भाक्तत्वं किंवा मुख्यत्वम् ? नहि ब्राह्मणादीनां ब्राह्मणत्वादिजात्या मुख्यत्वभाक्तत्वे सम्भवतः । ययोर्येन रूपेण साजात्यं तयोस्तेन रूपेण मुख्यत्वभाक्तत्वयोर्वक्तुमशक्यत्वात् । अन्यथा साजात्यस्यैव भङ्गापत्तेः ।

नच मुख्यत्वं स्ववर्णाश्रमविहितयावत्कर्मकर्तृत्वं तच्छून्यत्वं तु भाक्तत्वमिति वाच्यम् । तथा सति आधुनिकानां सर्वेषामपि भाक्ततया निषेधाधिकारिणो दुर्लभत्वापातात् । वस्तुतस्तु

शङ्खचक्रोर्ध्वपुण्ड्रादिरहितो ब्राह्मणाधमः ।

स जीवन्नेव चण्डालः सर्वकर्मबहिष्कृतः ॥
विना यज्ञोपवीतेन विना चक्रस्य धारणात् ।
विना द्वयेन वै विप्रः चण्डालत्वमवाप्नुयात् ॥
उपवीतं शिखाबन्धमूर्ध्वपुण्ड्रं तथैव च ।
चक्रलांछनहीनस्य विप्रस्य विफलं भवेत् ॥

इत्यादिपराशरवचनैः

अधृत्वा वैष्णवं चक्रं यत्कर्म क्रियते नरैः ।
तत्सर्वं राक्षसैर्नीतं इष्टापूर्तं द्विजोत्तम ॥

इति अत्रिवचनेन

अचक्रधारी यो विप्रः बहुवेदश्रुतोऽपि वा ।
स जीवन्नेव चण्डालः मृतश्वानोऽभिधीयते (भिजायते) ॥
अचक्रधारी विप्रस्तु सर्वकर्मसु गर्हितः ।
अवैष्णवत्वमापन्नो नरकं चाधिगच्छति ॥
चक्रादिचिह्नरहितं प्राकृतं कलुषान्वितम् ।
अवैष्णवं तु तं दूरात् श्वपाकमिव सन्त्यजेत् ॥
शङ्खचक्रोर्ध्वपुण्ड्रादिरहितो ब्राह्मणाधमः ।
प्रच्युतस्सर्वधर्मेभ्यो निरयं गच्छति ध्रुवम् ॥
हित्वा यज्ञोपवीतं तु हित्वा चक्रस्य धारणम् ।
हित्वा शिखोर्ध्वपुण्ड्रं तु विप्रत्वाद्भ्रश्यते ध्रुवम् ॥

इत्यादिहारीतवचनैः

अधृत्वा विधिवच्चक्रं यदि कर्म समाचरेत् ।
निष्फलं तु भवेत्सर्वमिष्टापूर्तं द्विजोत्तम ॥

इत्यादिवसिष्ठवचनैः

ऊर्ध्वपुण्ड्रं शिखाबन्धमुपवीतं सुशोभनम् ।
चक्रलांछनहीनस्य विप्रस्य विफलं भवेत् ॥

इति वृद्धमनुवचनेन

शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः ।
रहितः सर्वधर्मेभ्यः प्रच्युतो नैनमाप्नुयात् ॥

इत्यादिभारद्वाजवचनेन

शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः ।
रहिता ये द्विजा देवि ते वै पाषण्डिनस्स्मृताः ॥
ऊर्ध्वपुण्ड्रविहीनो यः शङ्खचक्रविवर्जितः ।
तं गर्दभे समारोप्य बहिष्कुर्यात्स्वपट्टणात् ॥

इत्यादिपाद्मादिवचनैश्च तप्तचक्राद्यधारणे बहुदोषप्रतिपादनेन तस्य नित्यत्वात् मुख्यभाक्तविभागेन व्यवस्था न शक्यकल्पना ॥

नचैतद्वचनैस्सामान्यतश्चक्राद्यधारण एव प्रत्यवायः प्रतिपाद्यते, नतु तप्तचक्राद्यधारणे, तप्तादिपदाभावात् । तथा च शीतलचक्रादिधारणेनापि प्रत्यवायपरिहारस्सम्भवतीति वाच्यम् । तप्तचक्रादिधारणविधायकोपक्रमानुरोधेनैव उपसंहारस्थतद्वाक्यार्थवर्णनस्य उपक्रमाधिकरणराद्धान्तसिद्धत्वात् । एषां वचनानां तप्तचक्रादिधारणपरप्रकरणसंवलितत्वेन तप्तचक्रादिधारणपरत्वस्य प्रकरणसंवलनन्यायसिद्धत्वात् सर्वशाखाप्रत्ययमेकं कर्मेति न्यायेन एकस्य तप्तचक्रादिधारणकर्मणः तद्विधायकनानाविधवाक्यगतेतिकर्तव्यताकलापोपसंहारेण अनुष्ठेयतया तप्तपदाद्युपसंहारस्यावर्जनीयत्वात् । सामान्यवाचकपदस्य विशेषे पर्यवसानस्य 'पशुना यजेत' इत्यादौ जैमिनिना 'छागो वा मन्त्रवर्णात्' इत्यादिना निर्णीतसामान्यविशेषन्यायसिद्धत्वेन चक्रादिपदस्य तप्तचक्रादिपरत्वाच्च उदाहृतानामुदाहरिष्यमाणानां च सर्वेषां वचनानां तप्तचक्रादिधारणपरत्वेन शीतलचक्रादिधारणे प्रमाणाभावात् ॥ नच

कृष्णायुधांकितो देहे गोपीचन्दनमृत्स्नया ।
प्रयागादिषु तीर्थेषु स गत्वा किं करिष्यति ॥

इति वराहपुराणीयवचनमेव प्रमाणमिति वाच्यम् । तत्र तच्छब्दश्रवणेनान्वयानुपपत्त्या च यस्येतिपदस्याध्याहार्यतया तद्वचनस्य विद्वद्वाक्यवत् अनुवादरूपतया विधिसाकाङ्क्षत्वात् सामान्यवाचकपदस्य सति विशेषे तत्पर्यवसानस्य न्यायसिद्धत्वाच्च ॥

स्त्रीशूद्राणां सदा धार्यं चन्दनेन सुगन्धिना ।
बाहुमूले लिखेच्चक्रम्—

इत्यादितद्विधायकपाद्मवचनेन तद्वचनस्य स्त्रीशूद्रपरत्वात् । अन्यथा 'तप्तं तु

ब्राह्मणस्यैव,

तप्तेनैवांकनं कुर्यात् ब्राह्मणस्य विशेषतः ।
श्रौतस्मार्तादिसिद्ध्यर्थं मन्त्रसिद्ध्यै तथैव च ॥

इति तदुत्तरवचनेन 'श्रुतमेवांकयेत्, इत्यादिहारीतादिवचनेन विरोधापत्तिः। तत्रावधारणेन ब्राह्मणस्यातप्तचक्रादिधारणनिषेधात् । नच तर्हि स्त्रीशूद्रयोः तप्तचक्रादिधारणे अधिकारो न स्यादिति वाच्यम् ।

अङ्कयेत्तप्तचक्राद्यैरात्मनो बाहुमूलयोः ।
कलत्रापत्यभृत्येषु पश्वादिषु च मुक्तये ॥

इत्यादितत्रत्येनैव वचनेन

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो नारी तथेतरः ।

'स्त्रीणां च श्रुतिचोदनात्, 'वैश्यश्शूद्रस्तथैवच, 'अन्ये सङ्करजाताश्च, इत्यादिभिः सर्वेषां तप्तचक्रादिधारणविधायकवचनैः स्त्रीशूद्रयोरपि तप्तचक्रादिधारणेऽधिकारे सिद्धे विकल्पस्याष्टदोषदुष्टत्वेनान्याय्यत्वात् गुरुविधायकशास्त्रस्याप्रामाण्यापत्तिभिया गुरुलघुविकल्पस्यासम्भवाच्च समुच्चयस्यैव स्त्रीशूद्रविषये ऊरीकर्तव्यत्वात् ॥

एवं तप्तचक्रादिधारणस्य क्षेत्रविशेषाधिकरणकत्वप्रतिपादकानामन्यत्र निषेधप्रतिपादकानामपि वचनानां 'जाते पुत्रे पिता स्नात्वा, 'ग्रामे व यदि वाऽरण्ये, इत्यादिबहुप्रमाणविरोधेन 'नहिनिन्दा' न्यायेन च उदितानुदितहोमस्थलवत् क्षेत्रविशेषप्रशंसापरत्वमेव । तदपि तप्तचक्रादिधारणपद्धत्युक्तेतिकर्तव्यताकलापसम्भवे बोध्यम् ॥ अन्यथा 'विधिना वैष्णवं चक्रम 'तस्माच्चक्रं विधानेन' 'विधिना धारयेदेवम्' 'तस्मात्तु विधिवच्चक्रम् 'तस्माद्वै विधिवद्धार्या' 'अङ्कयेद्विधिवद्ब्रह्मन्' इत्यादि बहुप्रमाणविरोधापत्तिः ॥

यत्तु —दीक्षाकाले शीतलचक्रादिधारणं कार्यम्, कालान्तरे गुर्वाज्ञया द्वारकायामेव तप्तचक्रादि धार्यम्। द्वारकां गन्तुमसमर्थैस्तु शीतल चक्राद्येव धार्यम् । समर्थैस्तु द्वयमपि धार्यमिति—तदसत् । ब्राह्मणान शीतलचक्रादिधारणे प्रमाणमेव नास्तीति व्यवस्थापितत्वात् ।

वसिष्ठान्मुनिशार्दूलात् दिलीपप्रमुखा नृपाः ।

धारयिष्यन्ति भूलोके महाशस्त्रं सुदर्शनम् ॥
रामो राजीवताम्राक्षो भूत्वा दशरथात्मजः ।
धृत्वा तप्तायसीं मुद्रां देवकार्यं करिष्यति ॥

इत्यादिपाञ्चरात्रान्तर्गत सुदर्शनगीतादिवचनैः अन्यैश्च स्कान्दादिवचनैः द्वारकाशून्यकालेऽपि तप्तचक्रादिधारणप्रतिपादनेन तदसङ्गतत्वापत्तेश्च । न च तथा सति द्वारकायाः नित्यत्वात् न तच्छून्यकालप्रसिद्धिरिति वाच्यम् । द्वारकायाः विश्वकर्मनिर्मितत्वप्रतिपादकप्रमाणविरोधात् । नच सा भिन्नेति वाच्यम् ; द्वारकाद्वये प्रमाणाभावात् ॥

किंच दीक्षाकाले शीतलचक्रादि धार्यमित्यपि न सङ्गच्छते ।

अचक्रधारिणं विप्रं योऽध्यापयति देशिकः ।
शिष्येण नरकं याति कल्पकोटिशतं द्विजः ॥
तस्मात्तापादिसंस्कारात्सर्वमन्त्राननुत्तमान् ।
अध्यापयेद्गुरुस्सम्यक् अन्यथा नरकं व्रजेत् ॥

इत्यादिपराशरवचनैः 'तापादिपञ्चसंस्काराः' इत्यादिना महताप्रबन्धेन तप्तचक्रादिधारणं विधाय, मन्त्रोपदेशविधायकैः–

अचक्रधारिणं विप्रं मन्त्रमध्यापयेत्तु यः ।
रौरवं नरकं याति चाण्डालीं योनिमाप्नुयात् ॥
तस्माद्दीक्षाविधानेऽपि शिष्यं भक्तिसमन्वितम् ।
मन्त्रमध्यापयेद्विद्वान् वैष्णवं पापनाशनम् ॥

इत्यादिहारीतवचनैः, तथैव

तापः पुण्ड्रस्तथा नाम मन्त्रो यागश्च पञ्चमः ।
अमी च पञ्चसंस्काराः पारमैकान्त्यहेतवः ॥
तापयित्वन् गुरुश्शिष्यं चक्राद्यैर्हेतिभिर्हरेः ।
पुण्येऽह्नि नियतः स्नात्वा स्नातं मन्त्रजलाप्लुतम् ॥

इत्यादितप्तचक्रादिधारणविधायकप्रकरणोक्तैः

ततश्च व्यापकान्मन्त्रानन्यांश्चांगैस्समन्वितान् ।
दत्वाऽस्मै पुनरेवैनं गृहीत्वा वृत्तिमादिशेत् ॥
मन्त्रसंस्कारयुक्तस्य नचेत्तापादिकं तदा ।

परमाख्या भवेच्छान्तिरविभागे सतामपि ॥
अपिचेत्सिवनपरो नचेत्तापादिसंस्कृतः ।
अनर्चाऽर्हतया विष्णोर्दास्यात्प्रच्यवते ध्रुवम् ॥

इत्यादिभरद्वाजवचनैः अन्यैश्च वसिष्ठादिवचनैः तापसंस्कारं विना मन्त्रसंस्कारकरणे बहुदोषप्रतिपादनेन मन्त्रादिसंस्कारस्य तापसंस्कारपूर्वकत्वनियमेन दीक्षाऽऽदिकाले अवश्यं तप्तचक्रादेरेव धार्यतया शीतलचक्रादिधारणे प्रमाणाभावात् ॥

अपि च कालान्तरे गुर्वाज्ञया द्वारकायामेव तप्तचक्रादि धार्यमित्यपि न सङ्गच्छते ।

चक्रं वै कर्मसिद्ध्यर्थं जातकर्मणि धारयेत् ।
मन्त्रसंस्कारसिद्ध्यर्थं मन्त्रदीक्षाविधौ तथा ॥
उद्वाहसमये स्त्रीणां पुंसां चैवोपनायने ।
चक्रस्य धारणं प्रोक्तं मन्त्रैः पञ्चायुध (ानि) स्य वा ॥

इत्यादिपराशरवचनैः

चक्रस्य धारणे कालं ब्राह्मणानां विदुर्बुधाः ।
जातकर्मणि वै कुर्यादत्र चक्रादिधारणम् ॥ इति शेषः ।

चौलोपनयनेऽपि वा

मन्त्राध्ययनकाले वा चक्रं धार्यं विधानतः । तथा—
जातकर्मण्यभावे तु विष्णोश्चक्रादिधारणम् । षष्ठ्यर्थे प्रथमा ।
चौलोपनयने वाऽपि तन्मन्त्राध्ययनेऽपि वा ।
विधिना वैष्णव चक्रं धारयित्वा द्विजोत्तमः ॥
कर्म कुर्यात्ततः पश्चात् श्रौतं स्मार्तं विधानतः ।

इत्यादिवसिष्ठवचनैः

तेनाग्निनैव सन्तप्तं चक्रेण भुजमूलयोः ।
अङ्कयित्वा शिशोः पश्चान्नाम कुर्याच्च वैष्णवम् ॥
तथा—मन्त्रग्रहणकाले तु विष्णोः पञ्चायुधानि च ।
धारयेद्विधिवद्विप्रः होमं कृत्वा सदक्षिणम् ॥

इत्यादिवृद्धमनुवचनैश्च जातकर्म नामकरण चौलोपनयन मन्त्राध्ययनान्यतम-

कालस्यैव तप्तचक्रादिधारणकालत्वप्रतिपादनेन कालान्तरे तद्धारणे प्रमाणामाभावात् ॥

नचैतद्वचनैः जातकर्मादिकाले तप्तचक्रादिकं कर्मादिसिद्ध्यर्थतयैव धार्यमिति प्रतीयते न मोक्षार्थतया । तथा च मोक्षार्थतया कालान्तरेऽपि द्वारकायां तप्तचक्रादिधारणं युज्यत एवेति वाच्यम् । तप्तादिधारणस्य साक्षान्मोक्षानुपायत्वात् । अन्यथा 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' 'भक्त्या परमया वाऽपि प्रपत्त्या वा महामते । प्राप्योऽहं नान्यथा प्राप्यः' इत्यादिबहुप्रमाणविरोधः । तथा च कर्मयोगादेर्यथा भक्तियोगद्वारा मोक्षोपायत्वं तथा तप्तचक्रादिधारणस्यापि कर्मादिसिद्धिद्वारैव मोक्षोपायत्वं स्वीकर्तव्यमिति मोक्षार्थतया कालान्तरे तप्तचक्रादिधारणे मानाभाव एवेत्यादिकं बहुतरमूहनीयम् ॥

ननु तथाऽपि वैष्णवसंप्रदायवतां ब्राह्मणानां तप्तचक्रादिधारणे अधिकारः तद्रहितब्राह्मणानां तु तन्निषेधे अधिकार इति व्यवस्थाऽस्त्विति चेत्-न ।

तस्माच्च वैष्णवा विप्राः प्रकृत्या द्विजसत्तमाः ।
अवैष्णवत्वं विप्राणां महापातकसम्मितम् ॥
अवैष्णवस्तु यो विप्रः सर्वकर्मसु गर्हितः ।
रौरवं नरकं प्राप्य चाण्डालीं योनिमाप्नुयात् ॥
अवैष्णवत्वं विप्राणामात्मनाशाय कारणम् ।
तस्मात्तु वैष्णवत्वं वै विप्राणां श्रुतिचोदितम् ॥
नित्यं नैमित्तिकं काम्यं त्रिविधं श्रुतिचोदितम् ।
अवैष्णवानां विप्राणां कर्म तन्निष्फलं भवेत् ॥

इत्यादिवासिष्ठस्मृतिवचनैः

अवैष्णवत्वं विप्राणां अब्रह्मण्यमिति स्मृतम् ।
अवैष्णवं ब्राह्मणं तु श्वपाकमिव संत्यजेत् ॥

इत्यादिवासिष्ठसंहितावचनैः

क्रतुसाहस्रिणं वाऽपि लोके विप्रमपापिनम् ।
चण्डालमिव नेक्षेत वर्जयेत्सर्वकर्मसु ॥
शङ्खचक्रविहीनास्तु देवतान्तरपूजकाः ।

द्वादशीविमुखा विप्राश्शैवाश्चावैष्णवास्स्मृताः ॥

अवैष्णवस्स्याद्यो विप्रो बहुवेदश्रुतोऽपि वा ।

स जीवन्नेव चण्डालः मृतश्श्वानोऽभिजायते ॥

इत्यादिभिः हारीतादिवचनैश्च ब्राह्मणस्यावैष्णवत्वे बहुदोषप्रतिपादनेन ब्राह्मणत्वस्य वैष्णवत्वव्याप्यतायाः प्रमाणानुमतत्वात् वैष्णवावैष्णवब्राह्मणविभगेन व्यवस्थाऽनुपपत्तेः ॥

एवं च रामार्चनचन्द्रिकाग्रन्थस्यापि सर्वैरपि ब्राह्मणैः वैष्णवसंप्रदायस्यैवानुसर्तव्यतया संप्रदायानुरोधेन सर्वैरपि ब्राह्मणैस्तप्तचक्रादिधारणं कर्तव्यमित्यभिप्रायः ॥

नच– 'ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः' इति पाद्मादिवचनेषु ब्राह्मणस्य पृथग्ग्रहणात् अवैष्णवस्यापि ब्राह्मणत्वं प्रामाणिकमिति वाच्यम् तथाऽपि तद्वचनस्य तप्तचक्रादिधारणविधायकत्वेन अवैष्णवेनापि ब्राह्मणेन तप्तचक्रादिधारणस्य कर्तव्यतया तदनधिकारासिद्धेः ॥

वस्तुतस्तु पृथग्ग्रहणमवैष्णवस्य ब्राह्मणत्वं नावगमयति उक्तस्मृत्यादिविरोधात् । अपि तु आहिताग्न्यनृतवादनिषेधवत् आत्रेयब्राह्मणहननानिषेधवच्च ब्राह्मणस्य तप्तचक्राद्यधारणे अब्राह्मणापेक्षया प्रत्यवायाधिक्यमेवावगमयति ॥

यत्तु त्रिपुण्ड्रोर्ध्वपुण्ड्र भस्म शीततप्तशङ्खचक्रादिकं यथाऽऽचारं धार्यमिति व्यवस्थेति, तत् अनधीतवेदतया अनधिगतवैदिकावैदिकाचारविभागस्य यथेच्छाचरणेनोदरंभरेः कुतर्ककल्पितमेवेति सन्तो नाद्रियन्ते । तथा हि– यत्र कर्मणां प्रामाणिकविकल्पं प्रमाणाविरुद्धं वाऽनुष्ठानं तत्रैव यथाऽऽचारं व्यवस्था न सर्वत्र । तथा सति श्रुतिस्मृत्यादिविरुद्धस्य परदारगमन सुरापानादेः आचारप्राप्तत्ववादिनः कथं पराजिताः स्युः ? तथा च प्रकृते ब्राह्मणस्य भस्मत्रिपुण्ड्रादिधारणे ऊर्ध्वपुण्ड्रतप्तचक्राद्यधारणे प्रत्यवायश्रवणेन ब्राह्मणैः भस्मत्रिपुण्ड्रादिकं परित्यज्यावश्यमूर्ध्वपुण्ड्र तप्तचक्रादेरेव धार्यतया यथाचारं व्यवस्थायाः असम्भवात् ॥

तथा हि महोपनिषदि– 'धृतोर्ध्वपुण्ड्रः परमीशितारम्' इत्यादि, अथर्वणि– 'हरेः पादाकृतिमात्मनो हि—कायमध्ये छिद्रमूर्ध्वपुण्ड्रम्' इत्यादि श्रूयते ॥

ब्रह्मरात्रे—

ब्राह्मणस्योर्ध्वपुण्ड्रं स्यात् क्षत्रियस्यार्धचन्द्रकम् ।
वैश्यस्य वर्तुलाकारं शूद्रस्यैव त्रिपुण्ड्रकम् ॥
त्रिपुण्ड्रं ब्राह्मणो विद्वान् लीलयाऽपि न धारयेत् ।
धारयेत्प्रयतस्सम्यगूर्ध्वपुण्ड्रं प्रयत्नतः ॥
ब्राह्मणेन न कर्तव्यं तिर्यक्पुण्ड्रस्य धारणम् ।
स शूद्र इति मन्तव्यः तिर्यक्पुण्ड्रस्य धारणात् ॥ इति

वृद्धजाबालः—

शस्त्रधार्यस्त्रधारी च धनुर्धारी धनापहः ।
त्रिपुण्ड्रधारी यो विप्रः स चण्डालसमो भवेत् ॥ इति

पराशरः—

अच्छिद्रमूर्ध्वपुण्ड्रं तु त्रिपुण्ड्रं यस्तु धारयेत् ।
स जीवन्नेव शूद्रत्वं आशु गच्छत्यसंशयः ॥
कपाल केश भस्मास्थि शुक्तिपाषाणधारिणम् ।
त्रिपुण्ड्रधारिणं विप्रं चण्डालमिव संत्यजेत् ॥
अग्निदं गरदं चैव लिङ्गपाषाणधारिणम् ।
तिर्यक्पुण्ड्रं नृपो विप्रं स्वराष्ट्राद्विप्रवासयेत् ॥
तस्मात्तु ब्राह्मणो नित्यमूर्ध्वपुण्ड्रं हि धारयेत् । इति

हारीतः—

न भस्म धारयेद्विप्रः परमापद्गतोऽपि वा ।
मोहेन बिभृयाद्यो वै स सुरापो भवेद्ध्रुवम् ॥
तिर्यङ्नधारयेत्पुण्ड्रमापद्यपि कदाचन ।
तिर्यक्पुण्ड्रधरं विप्रं चण्डालमिव संत्यजेत् ॥ इति

वसिष्ठः—

तस्मात् त्रिपुण्ड्रं विप्राणां न धार्यं मुनिसत्तमाः ।
यद्यज्ञानाच्च बिभृयुः पतितास्ते न संशयः ॥ इति

पाद्मे—

ब्राह्मणः कुलजो विद्वान् भस्मधारी भवेद्यदि ।

ता शं वर्जयेद्देवि मद्योच्छिष्टघटं यथा ॥ इति

एवमन्यान्यपि बहूनि त्रिपुण्ड्रभस्मादिधारणनिषेधोर्ध्वपुण्ड्रधारणप्रतिपादकानि वचनानि सन्ति। ग्रन्थविस्तरभयान्नेहोदाह्रियन्ते ॥ नच

येषां भस्मनि विद्वेषो वर्तते हृदये सदा ।
संकीर्णा सा भवेद्ब्रह्मन् एषां वंशपरम्परा ॥
त्रिपुण्ड्रं धारयेद्भक्त्या मनसाऽपि न लङ्घयेत् ।
त्रिपुण्ड्रं परमं पुण्यं ब्रह्मविष्णुशिवात्मकम् ॥

इत्यादिलैङ्गनारदीयादिवचनैः भस्मत्रिपुण्ड्रादिधारणमपि प्रतीयतइति वाच्यम्।

पार्वत्युवाच–

भगवन् परमं गुह्यं पृच्छामि सुरसत्तम।
मयि प्रीत्या समाचक्ष्व संशयो वर्तते भृशम् ॥
कपालभस्मचर्मास्थिधारणं श्रुतिगर्हितम् ।
यत् त्वया धार्यते देव गर्हितं केन हेतुना ॥ इत्यारभ्य
इयं देवहितार्थाय वृत्तिर्वेदविगर्हिता ।
विष्णोराज्ञां पुरस्कृत्य कृतं भस्मास्थिधारणम् ॥
बाह्यचिह्नमिदं देवि मोहनार्थं सुरद्विषाम् ।

इत्यन्तेन पाद्मोत्तरखण्डाधिकरणकोमामहेश्वरसंवादीयेन महता प्रकरणेन,

तामसेषु पुराणेषु मोहनार्थं सुरद्विषाम् ।
त्रिपुण्ड्रधारणं प्रोक्तं तामसैर्मुनिसत्तमैः ॥
असुराणां मोहनाय त्रिपुण्ड्रं विहितं पुरा।
त्रिपुण्ड्रं तु न कुर्वीत संप्राप्ते मरणेऽपि च ॥

इत्यादिवचनैश्च भस्मत्रिपुण्ड्रादिधारणपराणां वचनानामसुरमोहनार्थत्वेन तामसत्वप्रतिपादनात् तेषामप्रामाण्यात् ॥

ननु तर्हि व्रीहियवयोरिव तप्तचक्रादिधारणतन्निषेधयोः विकल्प एव उररीक्रियतामिति चेत्– न। यत्रैककार्यावच्छेदेन युगपत् समसाधनद्वयस्य प्राप्तिस्तत्रैव विकल्पः। अन्यथा अग्नीषोमीयाश्वमेधयोरपि विकल्पस्स्यात्। प्रकृते च धारणाविधिफले मोक्षादौ न तन्निषेधस्य साधनत्वेन प्राप्तिः तथा सति दुःखरूपे तप्तचक्रादिधारणे न कोऽपि प्रवर्तेतेति विधेरननुष्ठापकत्वल-

क्षणाप्रामाण्यापत्तया साधु विकल्पस्समर्थितस्स्यात् । षोडशिग्रहणाग्रहण विकल्पोक्तेस्तु यदा यागः शीघ्रं समापनीयः अल्पीयान् वा सोमरसः तदा षोडश्यग्रहणेऽपि न क्रतोर्वैगुण्यम् । अन्यथा तु गृहीतव्य इत्यभिप्राय इति न तत्र विधेरननुष्ठापकत्वलक्षणाप्रामाण्यम् । प्रकृते च निरुक्तरीत्या तप्तचक्रादिधारणस्य नित्यतया न केनाप्यप्रामाण्यव्यवस्थासम्भवः ॥

यत्तु 'अग्निहोत्रम्' इत्यादिपाद्मवचने अग्निहोत्र वेदाध्ययनोपमानव्यभिचारेणोपमेयव्यभिचार इति न तप्तचक्रादिधारणं नित्यम् अन्यथा अग्निहोत्रवेदाध्ययनरहितब्राह्मणोऽपि विरुद्धस्स्यादिति—तन्न ।

अग्निकार्यात्परिभ्रष्टाः संध्योपासनवर्जिताः ।
वेदं चैवानधीयानाः सर्वे ते वृषलास्स्मृताः ॥

इत्यादिपराशरादिवचनैः अकरणे प्रत्यववायप्रतिपादनेन अग्निहोत्रवेदाध्ययनयोः संध्योपासनवन्नित्यत्वेन उपमानव्यभिचाराभावात् ॥ इयांस्तु विशेषः अग्निहोत्रं तु आश्रमविशेषे नित्यम्, वेदाध्ययनं तु वर्णविशेष इति ॥

अत एवाग्निहोत्रे नित्यत्वानपायेऽपि किंचिद्वैषम्यं मनसि निधाय वेदाध्ययनं निदर्शितम् । तर्हि कुतो नाधीयते वेदं केचिदाधुनिका इतिचेत्— त एव प्रष्टव्याः ये नाधीयते न वयम् । तस्मादुपमानव्यभिचाराभावान्नोपमेव्ययभिचार इत्यवश्यमेव कर्तव्यं तप्तचक्रादिधारणं सर्वैर्ब्राह्मणैस्तादितरैश्चेत्यनवद्यम् ।

यत्तु वैदिके कर्माणि कथं शूद्रादेरधिकार इति तन्न । सत्यवदनादौ इव वैदिकेऽपि तप्तचक्रादिधारणे शूद्रादेरप्यधिकारसम्भवात्तस्य वाचनिकत्वेनासङ्गतिविरहात् । कर्मविशेषे शूद्राद्यधिकारकत्वस्य मीमांसकैरपि निर्णीतत्वाच्चेति यत्किंचिदेतत् ॥

ननु तर्हि तप्तचक्रादिधारणनिषेधकोदाहृतविष्णवादिवचनानां का गतिः इति चेत् अत्र केचित्— तप्तचक्रादिधारणनिषेधक विष्णवादिवचनानि मूलकोशेष्वदर्शनात् रत्नावलीकारकल्पितान्येवेति न तेषां प्रामाण्यम् । आश्वलायनवचनं तु शिवचिह्नसहितविष्णुचिह्नधारणनिषेधपरत्वेन नैकैकनिषेधकम् ॥

न चैवं विष्णुचिह्नवत् शिवचिह्नस्यापि धारणप्रसङ्गः । तद्विधायकवचनाभावात् ।

आराधकाद्याः कर्मण्याः विष्णुचक्रेण लांछिताः ।
देवतान्तरचिह्नैस्तु अकर्मण्यास्तु लांछिताः ॥

इत्याद्यनेकवचनविरोधाच्चेत्याहुः ॥ अन्ये तु – तप्तचक्रादिधारणनिषेधकवचनानां सर्वेषामर्थान्तरपरत्वेन वा 'न हिंस्यात्' इत्यादिहिंसानिषेधवचनानामवैधहिंसानिषेधपरत्ववत् 'विधिना वैष्णवं चक्रम्' इत्यादिवचनैः संस्कृततप्तचक्रादिधारणस्यैव विहिततया असंस्कृततप्तचक्रादिधारणनिषेधपरत्वेन वा निर्वाह इत्याहुः ॥

वस्तुतस्तु 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुतिविरुद्धायाः 'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृतेः 'विरोधेत्वनपेक्षं स्यादसति ह्यनुमानम्' इति न्यायेन अप्रामाण्यस्य जैमिनिना पूर्वमीमांसायां व्यवस्थापितत्वात् स्मृत्यन्तरविरुद्धायाः कापिलहिरण्यगर्भादिस्मृतेः अप्रामाण्यस्य व्यासाचार्यैर्व्यवस्थापितत्वाच्च तद्वदेव तप्तचक्रादिधारणनिषेधकविष्ण्वादिवचनानां तद्विधायकोदाहृतश्रुतिविरोधेनाप्रामाण्यमेव गतिः ॥

किंच पाद्मे बह्वीः श्रुतीरुपन्यस्य

इत्येवं श्रुतयस्सर्वाः कथयन्ति वरानने ।
तथैव सेतिहासेषु पुराणेष्वपि कथ्यते ॥
तस्माद्वै विधिवद्धार्याः शङ्खचक्रादिहेतयः ।
ब्राह्मणानां विशेषेण वैष्णवानां विशेषतः ॥

होमाग्निसंतप्तपवित्रलांछितान् मूले तु बाह्वोः परमात्मनो हरेः ।
सन्तारयित्वा भवसागरं महत्परं पदं याति परेशलोकम् ॥

तथा— शङ्खचक्राङ्कनं कुर्यात् ब्राह्मणो बाहुमूलयोः ।
हुताग्निनैव सन्तप्तं सर्वपापापनुत्तये ॥
शङ्खं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा ।
धारयित्वैव विधिवद्ब्रह्मकर्म समाचरेत् ॥
अग्नितप्तं पवित्रं च धृत्वैव भुजमूलयोः
त्यक्त्वा यमपुरं घोरं याति विष्णोः परं पदम् ॥
अग्नितप्तेन चक्रेण ब्राह्मणो बाहुमूलयोः ।
अङ्कयित्वा जपन्मन्त्रं संसारान्मोक्षमाप्नुयात् ॥

इत्यादिवचनैः

शङ्खचक्रे स्फुटे कुर्यात् आत्मनो बाहुमूलयोः ।
सर्वाश्रमेषु वसतां स्त्रीणां च श्रुतिचोदनात् ॥

होमाग्निनैव सन्तप्तं चक्रमादाय वैष्णवः ।
दक्षिणं वाहुमूलं तु दग्ध्वा कर्म समाचरेत् ॥

इत्यादिवासिष्ठवचनैः

प्राङ्मुखस्तु समासीनं शिष्यं मन्त्रजलाप्लुतम् ।
प्रतप्तैश्शङ्खचक्राद्यैर्हेतिभिः प्रयतो गुरुः ॥
चक्रेण प्रतपेत्पूर्वं वाहुमूलं तु दक्षिणम् ।

इत्यादिपराशरवचनैः

तेनाग्निनैव सन्तप्तचक्रेण भुजमूलयोः ।
अङ्कयित्वा शिशोः पश्चान्नाम कुर्याच्च वैष्णवम् ॥

इत्यादिवृद्धवासिष्ठवचनैः

शेषधर्मे उमामहेश्वरसंवादे—

शङ्खचक्रांकितान् भक्तान् यः पूजयति मानवः ।
स साक्षाद्विष्णुसामीप्यं लभते नात्र संशयः ॥
शङ्खचक्रांकितं मर्त्यं यो भूम्यामभिवादयेत् ।
ललाटे पांसुसंख्याब्दं ब्रह्मलोके महीयते ॥
विष्णुचक्रांकितं दृष्ट्वा योऽभ्युत्थाय कृताञ्जलिः ।
स्वयं स कुलमुद्धृत्य ब्रह्मलोके महीयते ॥
अग्नितप्तेन चक्रेण बाहुमूले तु लांछिताः ।
दहन्ति सर्वपापानि ईश्वरत्वं लभन्ति च ॥
विष्णुचक्रांकितो विद्वान् यस्मिन्देशे तु संवसेत् ।
स देशो मत्प्रियः पुण्यो वैष्णवानामपि प्रिये ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
चक्रांकितस्य हिंसा च पञ्चैतेत्वतिपातकाः ॥

इत्याद्यनेकवचनैः,

'आग्नेये पञ्चायुधानि' इत्युपक्रम्य

अग्निमध्ये समारोप्य विधिवत्पूजयेत्ततः ।
अङ्कयेद्विधिवद्ब्रह्मन् अप्रमत्तस्समाहितः ॥
सर्वाश्रमेषु निष्ठानामन्येषां च विशेषतः ।

इत्यादिवचनैः,

ब्रह्माण्डे मोक्षधर्मे—

ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
अवश्यं धारयेच्चक्रमग्नितप्तमतन्द्रितः ॥

इत्यादिवचनैः,

स्कान्दे—

भुजद्वये शङ्खचक्रे अग्नितप्ते वहेन्नरः ।
परमानन्दमाप्नोति हरिसायुज्यलक्षणम् ॥

इत्यादिवचनैः,

विष्णुपुराणे—

भुजयुगमपि चिह्नैरङ्कितं यस्य विष्णोः
परमपुरुषनाम्नां कीर्तनं यस्य वाचि ।
ऋजुतरमपि पुण्ड्रं मस्तके यस्य कण्ठे
सरसिजमणिमाला यस्य तस्यास्मि दासः ॥

इत्यादिवचनैः

प्राङ्मुखं तु समासीनं शिष्यमेकाग्रमानसम् ।
प्रतपेच्छङ्खचक्रादिहेतिभिर्मन्त्रमुच्चरन् ॥

अन्यत्र—

तस्माच्चक्रं विधानेन तप्तं वै धारयेद्द्विजः ।
सर्वाश्रमेषु वसतां स्त्रीणां तु श्रुतिचोदनात् ॥

अन्यत्र—

वैष्णवानां तु हेतीनां प्रधानं चक्रमुच्यते ।
तेनैव बाहुमूले तु प्रतप्तेनांकयेद्बुधः ॥
अङ्गत्वात्सर्वकर्माणां वैष्णवत्वाच्च सर्वतः ।
धृत्वैव विधिवच्चक्रं हरेस्तप्तं द्विजोत्तमः ॥
कर्म कुर्याद्भगवतस्तस्यैवाज्ञामनुस्मरन् ।

इत्याद्यनेकहारीतवचनैः

ब्राह्मणः क्षत्त्रियो वैश्यश्शूद्रो नारी तथेतरः ।

चक्राद्यैरङ्कयेद्गात्रमात्मीयस्याखिलस्य च ॥
अनिष्टानां निवृत्त्यर्थमैकान्त्याय जगत्पतेः ।
सिद्ध्यर्थं कर्मणां चैव धार्यं चक्रादिलांछनम् ॥
बाह्वोर्ललाटे शिरसि हृदयेचाग्रजन्मनाम् ।
शङ्खचक्रगदाशार्ङ्गखड्गैर्मन्त्रेण दाहयेत् ॥
विष्णोरायतनाग्नौ वा गुरोरात्मन एव वा ।
हुते होमादिभिस्तप्तैः सुरूपैरर्चितैः क्रमात् ॥

इत्यादिभरद्वाजवचनैः

अग्निनैव तु सन्तप्तं चक्रमादाय वैष्णवः ।
दाहयेत्सर्ववर्णानां हरिसालोक्यसिद्धये ॥

इत्यादिव्यासगारुडवचनैः

तस्मात्सुदर्शनं चक्रं प्रतप्तं धारयेत् द्विजः ।
कर्मसिद्ध्यै विशेषेण तद्दास्यैककलामयः ॥

इत्याद्यात्रिवचनैः

भुजे चक्रं द्विजातीनां शिरश्चक्रं तु दैवतम् ।
अचक्रद्विजदेवानां पूजनं निष्फलं भवेत् ॥

इत्यादिशिल्पिशास्त्रवचनैः अन्यैश्च बहुभिः वराह वामन लैङ्ग मार्कण्डेयादित्य-पुराणादिवचनैः अत्र्यादिस्मृतिवचनैः, पाञ्चरात्राद्यागमैः पराशरसंहितावचनैश्च तप्तचक्रादिधारणाविधायकोदाहृतश्रुत्युपोद्बलितत्वेन 'विप्रतिषिद्धधर्मसमवाये भूयसां स्याद्बलीयस्त्वम्' इति न्यायेन च प्रबलैः श्रुत्यनुपोद्बलितत्वेन अल्पीयस्त्वेन च दुर्बलानां तप्तचक्रादिधारणानिषेधकविष्ण्वादिवचनानामप्रामाण्यमेव गतिः ॥

न च विष्ण्वादिस्मृत्या तन्मूलभूता काचित् श्रुतिरनुमीयत इति तदुपोद्बलितत्वेन तस्या अपि प्रबलतया प्रामाण्यं दुरपह्नवमिति वाच्यम् । प्रमाणतया निश्चिताया एव स्मृतेः श्रुत्यनुमापकत्वेन प्रत्यक्षश्रुतिबाधितत्वेन अप्रमाणभूतया विष्ण्वादिस्मृत्या श्रुत्यनुमानासम्भवात् । अन्यथा औदुम्बरीवेष्टनस्मृत्यादितोऽपि श्रुत्यनुमानसम्भवेन 'विरोधेत्वनपेक्षं स्यात्' इति न्यायस्य क्वाप्यप्रवृत्त्या निरवकाशत्वापत्तेः ॥

किंच कपिलादिस्मृतेरप्युक्तरीत्या प्रामाण्यापत्त्या सर्वे वेदान्ता व्याकुला भवेयुः । तस्मादनाघ्रातदोषगन्धाविच्छिन्नसंप्रदायश्रुतिस्मृत्यादिप्रमाणप्रतिपन्नत्वेन तप्तचक्रादिधारणं सर्वैरेव कर्तव्यमिति दिक् ॥

विस्तरस्तु स्मृतिकौस्तुभसुदर्शनमीमांसादावनुसन्धेयः ॥

वाधूलकुलसम्भूतरङ्गाचार्येण धीमता ।
कृतस्सुदर्शनो वादः करोतु कृतिनां मुदम् ॥

इति सुदर्शनवादः समाप्तः ॥

